न्य तैः प्रस्थापिताः परमपदं प्राप्नुवन्ति[1] ॥ ११ ॥

पुनरावृत्तिस्तेषामिह न विद्यते[2] ॥ १२ ॥

[3]धूमनिशाकृष्णपक्षदक्षिणायनपितृलोकचन्द्रमोऽभिमानिनीर्देवताः प्राप्य पुनरेव वायुवृष्टिजलभूमीः[4] प्राप्य व्रीह्याद्यन्नरूपेण शुक्रत्वमवाप्य[5] यज्ञदानतपोयुक्ताः संसारिणो योनिं व्रजन्ति[6] ॥ १३ ॥

अर्चिरादिधूमादिमार्गद्वयं यः प्रमत्तो न विजानात्यसौ भुजङ्गः[7] शलभः कृमिः कीटो वा भवेत्[8] ॥ १४ ॥

इति द्वितीयप्रश्ने प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

[1]अथवा वेदमभ्यसन् न्यस्तकर्मा वने वसन् [2]मितभुगयाचिताशी च परां सिद्धिमवाप्नुयात्[3] ॥ १ ॥

[4]अप्रतिग्रहेणोपार्जितधनः सत्यवादी [5]श्राद्धानुष्ठाननिरत आत्मतत्त्वज्ञाननिष्ठोऽतिथिप्रियो[6] गृहस्थो मुक्तिं प्राप्नुयात्[7] ॥ २ ॥

[8]महापातकिनो दारुणान् तामिस्रादिनरकान् प्राप्य तत्र प्रचुरदुःखमनुभूय पापशेषात् पुनरिह [9]संसारे दुःखबहुलश्वसृगालादितिर्यग्योनिषु भूयो भूयो जायन्ते[10] ॥ ३ ॥

ब्रह्महा मृगश्वसूकरोष्ट्रयोनिं[11] प्राप्नुयात्[12] ॥ ४ ॥

[1] अथ पङ्क्तौ वेदमभ्यसन्—अ ; अथवा वेदमभ्यस्यन्—क.

[2] मितभुगयाचिता परां—अ.

[3] cf., *अथवाप्यभ्यसन्वेदं न्यस्तकर्मा वने वसन् ।*
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥ याज्ञवल्क्यः, ३, २०४.
एवं संन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ।
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ मनुः, ६, ९६.

[4] प्रतिग्रहेण for अप्रतिग्रहेण—क.

[5] श्रद्धानुष्ठान॰—अ.

[6] विधिप्रियो for अतिथिप्रियो—अ.

[7] cf., *न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।*
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥ याज्ञवल्क्यः, ३, २०५.

[8] *महापातकिनोऽन्धतामिस्रादिनरकान्* —अ.

[9] संसारे श्वसृगालादि॰—क.

[10] cf., महापातकजान् घोरान्नरकान् प्राप्य दारुणान् ।
कर्मक्षयात्प्रजायन्ते महापातकिनस्त्विह ॥ याज्ञवल्क्यः, ३, २०६.
बहून् वर्षगणान् घोरान्नरकान् प्राप्य तत्क्षयात् ।
संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥ मनुः, १२, ५४.

[11] मृगश्वसूकरयोनिं—क.

[12] cf., मृगश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति । याज्ञवल्क्यः, ३, २०७.

सुरापः [1]खरपुल्कसवेनयोनिम्[2] ॥ ५ ॥

स्वर्णहारी [3]कृमिकीटपतङ्गयोनिम्[4] ॥ ६ ॥

गुरुतल्पगस्तृणगुल्मलतात्वं चाकामतः[5] ॥ ७ ॥

कामतो दुःखबहुलयोनिषु[6] ॥ ८ ॥

ब्रह्महा श्वसूकरखरोष्ट्रगोजाविमृगपक्षिचण्डाल[7]पुल्कसानाम्[8] ॥ ९ ॥

सुरापो [9]विड्भुक्कृमिकीटपतङ्गपक्षिणां हिंस्राणां च सत्त्वानाम्[10] ॥ १० ॥

स्तेनस्तु विप्रो [11]लूताहिसरटानां सरीसृपाणां [12]तिरश्चामम्बुचारिणां हिंस्राणां च पिशाचानाम्[13] ॥ ११ ॥

[1] खरपुल्कसवेनयोनिगः—अ ; खलपुल्कसयवनयोनिम्—क.

[2] cf., खरपुल्कसवेणानां सुरापो नात्र संशयः । याज्ञवल्क्यः, ३, २०७.

[3] कृमिकीटकपतङ्गयोनिम्—अ.

[4] cf., कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् । याज्ञवल्क्यः, ३, २०८

[5] cf., तृणगुल्मलतात्वं च बहुशो गुरुतल्पगः । याज्ञवल्क्यः, ३, २०८.

[6] cf., 'एतच्चाकामकृतविषयम् । कामकारकृते त्वन्यास्वपि दुःखबहुलयोनिषु संसरन्ति'॥ याज्ञवल्क्यस्मृतिव्याख्या मिताक्षरा, ३, २०८ ; पृष्ठम् ३६८.

[7] चाण्डाल for चण्डाल—अ.

[8] cf., श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥ मनुः, १२, ५५.

[9] विड्भुक्किमिकीटपतङ्गपक्षिणां—अ.

[10] cf., कृमिकीटपतङ्गानां विड्भुजां चैव पक्षिणाम् ।
हिंस्राणां चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत् ॥ मनुः, १२, ५६.

[11] लूताहिसरीसृपाणां—अ ; लूतासरटानां सरीसृपाणां—क.

[12] तिरश्चाम्बुचारिणां—अ.

[13] cf., लूताहिसरटानां च तिरश्चां चाम्बुचारिणाम् ।
हिंस्राणां च पिशाचानां स्तेनो विप्रः सहस्रशः ॥ मनुः, १२, ५७.

गुरुतल्पगस्तु गुल्मलतानां क्रव्यादानां च 'दंष्ट्रिणां क्रूरकर्मकृतां [a]चैव संसरन्ति[b] ॥ १२ ॥

इति द्वितीयप्रश्ने द्वितीयोऽध्यायः

---

## तृतीयोऽध्यायः

ब्रह्महा क्षयरोगी [a]स्यात् ॥ १ ॥

श्यावदन्तकः सुरापः ॥ २ ॥

कुनखी हेमहारी ॥ ३ ॥

दुश्चर्मा गुरुतल्पगः[b] ॥ ४ ॥

रौरवादिनरकेषु सूकरादियोनिषु च दारुणं दुःखमनुभूयानन्तरं दुरितशेषेण जननसमये क्षयरोगादियुक्ता भवन्ति ॥ ५ ॥

[1]दुःखप्रचुरेषु मानुषशरीरेषु संसरन्ति[2] ॥ ६ ॥

अन्नहर्ताऽजीर्णान्नः[3] ॥ ७ ॥

[4]पुस्तकहार्यननुज्ञाताध्यायी मूको भवति ॥ ८ ॥

धान्यमिश्रः[5] षडङ्गुलः स्यात् ॥ ९ ॥

पिशुनो [6]दुर्गन्धनासिकः ॥ १० ॥

[7]तैलहर्ता तैलपायी [8]कीटविशेषः ॥ ११ ॥

असद्दोषसंकीर्तनो दुर्गन्धवदनः[9] ॥ १२ ॥

[1] दुःखप्रचुरमानुषशरीरेषु—अ.

[2] Compare sūtras 5 and 6 with मिताक्षरा on याज्ञवल्क्य, III, 209.—"एवं रौरवादिनरकेषु श्वसूकरखरादियोनिषु च दारुणं दुःखमनुभूयानन्तरं दुरितशेषेण जननसमय एव क्षयरोगादिलक्षणयुक्ताः । प्रचुरेषु मानवशरीरेषु संचरन्ति"

[3] अन्नहर्ताजीर्णनदी—अ.

[4] पुस्तकादिमहार्यननुज्ञातात्याशी मूको—अ.

[5] धान्यहर्ता—क

[6] दुर्गन्धः नास्तिकः—क.

[7] तिलहर्ता—क.

[8] कफविशेषः—अ.

[9] Compare sūtras 7 to 12 with the following :
अन्नहर्तामयावी स्यान्मूको वागपहारकः ॥
धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः ।
तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः ॥ याज्ञवल्क्यः, ३, २१०-२११.
अन्नहर्ताऽऽमयावित्वं मौक्यं वागपहारकः ।
पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् ।
[धान्यचौरोऽङ्गहीनत्वं]आतिरेक्यं तु मिश्रकः ॥ मनुः, ११, ५१, ५०.
[मांसं गृध्रो वपां मद्गुः]तैलं तैलपकः खगः ॥ मनुः, ११, १२, ६३.
अन्नापहारकस्त्वामयावी । वागपहारको मूकः । मिश्रचौरोऽतिरिक्ताङ्गः । पूतिनासः पिशुनः । तैलं तैलपायिकः । पूतिवक्त्रः सूचकः ॥ विष्णुः, ४५, ११-१२, १०, ७; ४४, २३; ४५, ८.

[1]एतच्च तिर्यक्त्वप्राप्त्यनन्तरं मानुषशरीरप्राप्तौ द्रष्टव्यम्[2] ॥ १३ ॥

यद्वा तद्वा परद्रव्यमपहृत्याहुतं [3]च हविर्जग्ध्वा तिर्यक्त्वं याति[4] ॥ १४ ॥

परस्य योषितं हृत्वा ब्रह्मस्वं[5] सुवर्णव्यतिरिक्तं हृत्वा बहु हिरण्यं प्रतिगृह्य चारण्ये निर्जले देशे ब्रह्मराक्षसः स्यात्[6] ॥ १५ ॥

पत्रशाकं हृत्वा मयूरः ॥ १६ ॥

शुभान् गन्धान् छुच्छुन्दरी नाम मूषिका जायते ॥ १७ ॥

धान्यहारी मूषको [7]भवति ॥ १८ ॥

*यानमुष्ट्रः ॥ १९ ॥*

फलं वानरः ॥ २० ॥

जलं [8]प्लवः ॥ २१ ॥

[1] प्रेतश्च तिर्यक्त्वं प्राप्यानन्तरं—अ.

[2] cf., एतच्च तिर्यक्त्वप्राप्त्युत्तरकालं मानुषशरीरप्राप्तौ द्रष्टव्यम्।
"यद्वा तद्वा . . . हविः" इति मनुस्मरणात्—याज्ञ. मिता., ३, २१०-२११.
अथ नरकाभिभूतदुःखानां तिर्यक्त्वमुत्तीर्णानां मनुष्येषु लक्षणानि भवन्ति। विष्णुः, ४५, १.

[3] च—omitted by अ.

[4] cf., यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः।
अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः॥
मनु:, १२, ६८; विष्णुः, ४४, ४४.

[5] ब्रह्मस्वमुवर्णव्यतिरिक्तं—अ.

[6] cf., परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः॥ याज्ञवल्क्यः, ३, २११.
संयोगं पतितैर्गत्वा परस्यैव च योषितम्।
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः॥ मनु:, १२, ६०. ['विप्रस्वं'—ब्राह्मणसुवर्णादिस्वमपहृत्य—कुल्लूकः].

[7] भवति—omitted by अ.

[8] ध्रुवः—अ.

[1]क्षीरं काकः ॥ २२ ॥

गृहोपस्करमुसलादि हृत्वा सरटाख्यः कीटविशेषो भवेत्[2] ॥ २३ ॥

मधु हृत्वा [3]दंशः ॥ २४ ॥

मांसं हृत्वा गृध्रः ॥ २५ ॥

गां हृत्वा [4]गोधाख्यः प्राणिविशेषः ॥ २६ ॥

[5]अग्निं पिकः[6] ॥ २७ ॥

[1] क्षीरकारो गृहोपस्कर०—क.

[2] Compare sūtras 16 to 23 with the following :

पत्रशाकं शिखी हृत्वा गन्धान् छुच्छुन्दरी शुभान् ॥
मूषको धान्यहारी स्याद्यानमुष्ट्रः कपिः फलम् ।
जलं प्लवः पयः काको गृहकारी ह्युपस्करम् ॥ याज्ञवल्क्यः ३, २१३-२१४.

'पत्रशाकं तु बर्हिणः' १२, ६५; 'छुच्छुन्दरिः शुभान् गन्धान्' १२, ६५; 'धान्यं हृत्वा भवत्याखुः' १२, ६२; 'यानान्युष्ट्रः' १२, ६७; 'फलमूलं तु मर्कटः' १२, ६७; 'जलं प्लवः' १२, ६२; 'पयः काकः' १२, ६२; 'गृहकारी ह्युपस्करम्' १२, ६६—मनुः

पत्रशाकं बर्ही । छुच्छुन्दरिर्गन्धान् । आखुर्धान्यहारी । यानमुष्ट्रः । फलं पुष्पं वा मर्कटः । जलं हृत्वाभिप्लवः । पयः काकः । गृहकार्युपस्करम् ॥—विष्णुः, ४४, ३२, ३१, १४, ४२, ४०, १६, १८, २६.

[3] दंशो—क.

[4] गोधाख्यः—अ.

[5] अग्नं पिकः—अ.

[6] Compare sūtras 24 to 27 with the following:

मधु दंशः पलं गृध्रो गां गोधाग्निं बकस्तथा ॥ याज्ञ., ३, २१५.

'मधु दंशः' १२, ६२; 'मांसं गृध्रः' १२, ६३; 'गोधा गाम्' १२, ६४; 'बको भवति हृत्वाग्निम्' १२, ६६—मनुः.

मधु दंशः । मांसं गृध्रः । गोधा गाम् । अग्निं बकः ॥ विष्णुः, ४४, १७, २१, २६, ३५.

मनुयाज्ञवल्क्यविष्ण्वादयः 'बको भवति हृत्वाग्निम्' १२, ६६, 'अग्निं बकस्तथा' ३, २१५, 'अग्निं बकः' ४४, ३५, इत्यादिनाग्निहर्ता बकयोनिं प्राप्नोतीत्याहुः । अत्र तु

इक्ष्वादिरसं [1]सारमेयः ॥ २८ ॥

लवणहारी [2]चीर्याल्य उच्चैःस्वर कीटविशेषः ॥ २९ ॥

कांस्यहारी हंसः[3] ॥ ३० ॥

अश्वं पङ्गुर्भवेत्[4] ॥ ३१ ॥

इति द्वितीयप्रश्ने तृतीयोऽध्यायः

---

करंज्ञककोशे 'अग्नि पिकः' इत्येव पाठो दृश्यते। असंज्ञककोशे 'अन्नं पिकः' इति पाठः। अन्नहरणे च 'कृतान्नं सेधा' 'अकृतान्नं शल्यकः' ४४, १३-१४, इत्येताभ्यां सूत्राभ्यां अन्य विष्णुराह। 'श्वाविल्कृतान्नं विविधमकृतान्नं तु शल्यकः' इति च मनुः, १२, ६५. अस्यैव परिशिष्टस्य चतुर्थाध्याये—'क्षीरहारी बकः' ५८ इत्यनेन सूत्रेण क्षीरहरणे बकयोनिप्राप्तिः, अत्रैवाध्याये 'क्षीरं काकः' २२ इत्यनेन क्षीरहरणे काकयोनिप्राप्तिश्च प्रतिपाद्यते। कोशान्तरलाभे समीचीनपाठप्राप्तिः स्यादपि।

[1] सारमेयी—क.

[2] चिल्याख्य—क.

[3] हंसश्च पङ्गुर्भवेत्—अ.

[4] Compare sūtras 28 to 31 with the following:
[श्विन्नी वस्त्रं] श्वा रसे तु चीरी लवणहारकः। याज्ञ., ३, २१५.
'यथा—कांस्यहारी हंसः इति' 'यथा—पङ्गुनामश्वापहारक इति' याज्ञ. मिता., ३, २१६.

'रसं श्वा' १२, ६२; 'चीरीवाकस्तु लवणम्' १२, ६१; 'हंसः कांस्यापहारी' १२, ६२—मनुः.

रसं श्वा। लवणं चीरिवाक्। हंसः कांस्यापहारी। अश्वापहारकः पङ्गुः॥ विष्णुः, ४४, १९, २४, १५; ४५, १४

## चतुर्थोऽध्यायः

[1]ब्रह्महा कुष्ठी स्यात्[2] ॥ १ ॥

[3]तैजसापहारी [4]मण्डली ॥ २ ॥

देवब्राह्मणाक्रोशकः खलतिः[5] ॥ ३ ॥

गरदाग्निदावुन्मत्तौ[6] ॥ ४ ॥

[7]गुरुं प्रतिहन्तापस्मारी[8] ॥ ५ ॥

[9]गोघ्नश्चान्धः[10] ॥ ६ ॥

धर्मपत्नीं मुक्त्वान्यत्र प्रवृत्तः [11]शब्दभेदी प्राणिविशेषः ॥ ७ ॥

[1] विज्ञानेश्वर attributes sūtras 1 to 22 to शङ्ख and 23 to 66 to गौतम (cf. याज्ञवल्क्यमिताक्षरा p. 370-371). माधव cites sūtras 23 to 65 under गौतम (cf., पराशरमाधवीयम्, प्रायश्चित्तकाण्डम्, p. 514-515 and 518). वैद्यनाथ cites sūtras 1 to 22 under शङ्ख and 23 to 65 under वृद्धगौतम. (cf., स्मृतिमुक्ताफलम्, प्रायश्चित्तकाण्डम्, p. 861-862).

[2] cf., ततो मानुषतां प्राप्य व्याधिभिस्तत्र पीड्यते ।
कुष्ठरोगेण घोरेण ब्रह्महत्यां प्रयोजयेत् ॥ शिवधर्मोत्तरे, परा. मा.प्रा., पृ. ५०६.

[3] तैजसोऽपहारी—अ.

[4] मण्डलः—क.

[5] cf., देवब्राह्मणाक्रोशको मूकः । विष्णुः, ४५, १५.
गुरुस्वामिद्विजाक्रोशं वेदनिन्दां तथैव च ।
कृत्वा (श्रुत्वा) भवति दुर्बुद्धिर्बधिरो वापि मानवः ॥
विष्णुधर्मोत्तरे, परा. मा. प्रा., पृ. ४९९.

[6] cf., उन्मत्तोऽग्निदः । लोलजिह्वो गरदः ॥ विष्णुः, ४५, १७, १६.

[7] गुरुं संहर्तापस्मारी—क. गुरुप्रतिहन्तापस्मारी—वैद्यनाथः, स्मृ. मु., पृ. ८६१.

[8] cf., गुरोः प्रतिकूलोऽपस्मारी । विष्णुः, ४५, १८; प्रतिकूलं गुरोर्यस्तु सोऽपस्मारी प्रजायते ॥ विष्णुधर्मोत्तरे, परा. मा. प्रा., पृ., ४९९.

[9] गोघ्नश्चाण्डालः—क.

[10] cf., गोघ्नस्त्वन्धः । विष्णुः, ४५, १९.

[11] शब्दवेधी—विज्ञानेश्वरः, याज्ञ. मिता., पृ. ३७०; धर्मपत्नीमुक्तौ त्यक्त्वान्यत्र प्रवृत्तः शब्दवेधी—वैद्यनाथः, स्मृ. मु., पृ. ८६१.

[1]भगभक्षः कुण्डाशी ॥ ८ ॥

देवब्राह्मणस्वापहारी पाण्डुरोगी ॥ ९ ॥

[2]स्वापहारी काणः ॥ १० ॥

[3]स्त्रीपण्योपजीवी षण्ढः ॥ ११ ॥

[4]कौमारदारत्यागी दुर्भगः[5] ॥ १२ ॥

[6]मृष्टैकाशी वातगुल्मी[7] ॥ १३ ॥

अभक्ष्यभक्षको[8] गण्डमाली[9] ॥ १४ ॥

[1] भगभक्षः—omitted by क; विज्ञानेश्वर reads—'कुण्डाशी भगभक्षो देवब्रह्मस्वहारी (देवब्रह्मस्वहरः) । पाण्डुरोगी न्यासापहारी च काणः' for sūtras 8, 9 and 10; याज्ञ. मिता., पृ. २७०; कुण्डाशी दंशभक्षः—वैद्यनाथः, स्मृ. मु., पृ. ८६१; कुण्डाशी भगभक्षो देवब्राह्मणापहारी पाण्डुरोगी न्यासापहारी काणः—मदनपारिजातः, पृ. ७०१.

cf., भगभक्षस्तु कुण्डाशी [दीर्घरोगी च पीडकः]—विष्णुधर्मोत्तरे, परा. मा. प्रा., पृ. ४९९; कुण्डाशी भगास्यः—विष्णुः, ४५, २४. शङ्ख in परा. मा. प्रा., पृ. ६१७ reads षण्ढो देवद्रव्योपजीवकः.

[2] नासापहारी काणः—अ; न्यासापहारी काणः—विज्ञानेश्वरवैद्यनाथौ; The *reading स्वापहारी काणः found in क MS. seems better as there is* another sūtra 'न्यासापहार्यनपत्यः' ३७, in the same chapter.

[3] स्रैण्योपजीवी—अ; स्त्रीमण्युपजीवी—क. स्त्रीवंश्योपजीवः—वैद्यनाथः.

[4] कौमारीदारत्यागी—अ.

[5] cf., ये त्यजन्ति स्वकां भार्यां मूढाः पण्डितमानिनः ।
दुष्कर्मा दुर्भगश्चैव दरिद्रः संप्रजायते ॥ स्कान्दे, रेवाखण्डे, परा. मा. प्रा., पृ. ४९८.

[6] अमृष्टाशी गुल्मी—क; मिष्टैकाशी—विज्ञानेश्वरः.

[7] cf., मृष्टाश्येकाकी वातगुल्मी । विष्णुः, ४५, २७.
मिष्टाश्येको महाभाग वातगुल्मी प्रजायते ॥ विष्णुधर्मोत्तरे, परा. मा. प्रा, पृ. ४९९.

[8] अभक्ष्यभक्षी—अ.

[9] cf., '*अभक्ष्यभक्षी गण्डमाली*' शिवधर्मोत्तरे, *परा. मा. प्रा.*, पृ. ५११.

ब्राह्मणीगामी [1]निर्बीजी ॥ १५ ॥

क्रूरकर्मा वामनः ॥ १६ ॥

वस्त्रापहारी पतङ्गः [2]श्वित्री च[3] ॥ १७ ॥

शय्यापहारी [4]क्षपणकः ॥ १८ ॥

[5]शङ्खशुक्त्यपहारी [6]कपाली ॥ १९ ॥

दीपापहारी कौशिकः[7] ॥ २० ॥

[8]मित्रध्रुक् क्षयी ॥ २१ ॥

मातापित्रोराक्रोशकः [9]करमोदरः ॥ २२ ॥

[10]अनृतवाग्वस्खलः[11] मुहुर्मुहुः संलग्नवाक् ॥ २३ ॥

[1] दुर्बीजी—अ.

[2] श्वसी—अ; श्वित्री च—omitted by वैद्यनाथ and मदनपारिजात.

[3] cf., वस्त्रापहारकः श्वित्री । विष्णुः, ४५, १३ ; 'श्वित्री वस्त्रम्' याज्ञवल्क्यः, ३, २१५ ; 'वस्त्रापहारी श्वित्री स्यात्' विष्णुधर्मोत्तरे, परा. मा. प्रा., पृ. ५१६.

[4] क्षणकः—अ.

[5] शङ्खशुक्तयोरपहारी—अ.

[6] कपाली—omitted by क.

[7] cf., [गोघ्नस्त्वन्धः ।] दीपापहारकश्च ॥ विष्णुः, ४५, २० ; 'अन्धो दीपापहारी स्यात्' विष्णुधर्मोत्तरे, परा. मा. प्रा., पृ. ५१६ ; but शङ्ख in page 517 reads पाण्डुरोगी दीपहारी.

[8] पत्नहत् क्षयी—क.

[9] खण्डनारकः—क ; खण्डकः, खण्डखारः—इति च विज्ञानेश्वरपाठौ ; खरण्टकः—वैद्यनाथः ; खण्डनखारः—मदनपारिजातः.

[10] विज्ञानेश्वर cites sūtras 23 to 66 under गौतम (See footnote 1,p.12. at the beginning of this chapter). cf., गौतमोऽपि कंचिद्विशेषमाह—अनृत etc. याज्ञ. मिता. (pp. 370-371). माधव follows him. वैद्यनाथ (pp. 861-862) and मदनपारिजात (pp. 701-702) cites under वृद्धगौतम.

[11] अनृतवाक् स्वलग्नकः—क ; अनृतवागुन्मत्तः—विज्ञानेश्वरमाधवौ ; अनृतवाक् खलः—वैद्यनाथः ; अनृतवाक् मुहुर्मुहुः etc.—मदनपारिजातः.

[1]जलोदरो दारत्यागी ॥ २४ ॥

[2]कूटसाक्षी श्लिष्टपदुच्छ्रितजङ्घाचरणः ॥ २५ ॥

विवाहविघ्नकर्ता [3]छिन्नोष्ठः ॥ २६ ॥

[4]अवगोरणी छिन्नहस्तः ॥ २७ ॥

[5]अयाज्ययाजको वराहः ॥ २८ ॥

अनिमन्त्रितभोजी वायसः ॥ २९ ॥

मृष्टैकभोजी[6] वानरः ॥ ३० ॥

मातृघ्नोऽन्धः ॥ ३१ ॥

[7]स्नुषागामी वातवृषणः ॥ ३२ ॥

चतुष्पथे विण्मूत्रविसर्जनेन[8] मूत्रकृच्छ्री ॥ ३३ ॥

कन्यादूषकः षण्ढः[9] ॥ ३४ ॥

[1] अवलो दारत्यागी—क; दारत्यागी जलोदरी—विज्ञानेश्वरः.

[2] कूटसाक्षी श्लीपदुच्छ्रित—अ; कूटसाक्षी श्लीपदी उच्छिन्नजङ्घाचरणः (अस्थूलजङ्घाचरणः)—विज्ञानेश्वरः; कूटसाक्षी श्लीपदी उच्छूनजङ्घाचरणः—माधवमदनपारिजातौ; श्लीपदी कूटसाक्षी उच्छ्रितजङ्घाचरणः—वैद्यनाथः.

[3] भिन्नोष्ठः—क.

[4] अपघोणाः—क; अवगूरणः—विज्ञानेश्वरमाधवौ; गोररक्षणे—वैद्यनाथः; अवगोरणकर्ता—मदनपारिजातः.

[5] *Sūtras* 28, 29 and 30 are omitted here and cited after *sūtra* 42 by विज्ञानेश्वर, माधव, वैद्यनाथ and मदनपारिजात.

[6] इष्टैरभोजी—क; मिष्टैकभोजी—मदनपारिजातः.

[7] स्नुषाह्वा वृषः—क.

[8] विण्मूत्रविमर्जनी—अ; विण्मूत्रविमर्जने — विज्ञानेश्वरमाधवमदनपारिजाताः; विण्मूत्रविमर्जनो—वैद्यनाथः.

[9] cf., चाण्डाल्यवकीर्णी कन्यादूषी सगोत्रागाम्यवीजो। शङ्खलिखितौ, परा. मा. प्रा. पृ. ५२२,

[1]ईर्ष्यालुर्मशकः ॥ ३५ ॥

पित्रा[2] विवदमानोऽपस्मारी ॥ ३६ ॥

न्यासापहार्यनपत्यः ॥ ३७ ॥

बालघाती मृतापत्यः[3] ॥ ३८ ॥

[4]रत्नापहार्यतिदरिद्रः ॥ ३९ ॥

विद्याविक्रयी[5] [6]पुरुषमृगः ॥ ४० ॥

[7]वेदविक्रयी द्वीपी ॥ ४१ ॥

बहुयाजको[8] जलप्लवः[9] ॥ ४२ ॥

यतस्ततोऽश्नन्[10] मार्जारः ॥ ४३ ॥

कक्षवनदाही[11] खद्योतः ॥ ४४ ॥

[12]वामाचारो मुखविगन्धिः ॥ ४५ ॥

[1] ईर्ष्यालुर्मशकः—अ ; माधव cites *sūtra* 46 before this.

[2] पित्रोः—माधवः.

[3] *Sūtra* 38 is omitted by विज्ञानेश्वर, माधव, वैद्यनाथ and मदनपारिजात.

[4] रत्नापहार्यत्यतिदरिद्रः—अ ; रत्नापहारी अत्यन्तदरिद्रः—विज्ञानेश्वरमाधववैद्यनाथमदनपारिजाताः.

[5] विद्याक्रयी—अ ; वेदविक्रयी—माधवः.

[6] पुरुषः मृगः—मदनपारिजातः.

[7] *Sūtra* 41 is omitted by माधव.

[8] बहुयाचको—वैद्यनाथः.

[9] *Sūtras* 28, 29 and 30 are cited after this *sūtra* by विज्ञानेश्वर, माधव, वैद्यनाथ and मदनपारिजात.

[10] यस्ततोऽश्नन्—अ ; यत्र तत्राश्नन्—मदनपारिजातः.

[11] कक्षवनदहनात्—विज्ञानेश्वरः ; कक्षवनदाहकः—वैद्यनाथः.

[12] दाल्हकाचार्यो मुखविगन्धः—अ ; दारकाचार्यो मुखविगन्धिः—विज्ञानेश्वरः ; दारकाचार्यो मुखविगन्धः—माधवः ; वारकाचार्यो मुखविद्गन्धः—वैद्यनाथः ; दारिकाचार्यो मुखविगन्धः—मदनपारिजातः.

पर्युषितभोजी कृमिः[1] ॥ ४६ ॥

अदत्तादायी बलीवर्दः ॥ ४७ ॥

मत्सरी भ्रमरः ॥ ४८ ॥

अग्न्युत्सादी [2]मण्डलकुष्ठी ॥ ४९ ॥

शूद्राचार्यः[3] श्वपाकः ॥ ५० ॥

गोहर्ता सर्पः ॥ ५१ ॥

स्नेहापहारी क्षयी[4] ॥ ५२ ॥

[5]चण्डालीपुल्कसीगाम्यजगरः[6] ॥ ५३ ॥

प्रव्रजितागामी[7] मरुपिशाचः ॥ ५४ ॥

शूद्रीगामी[8] [9]दीर्घकीटः ॥ ५५ ॥

सवर्णागामी[10] दरिद्रः[11] ॥ ५६ ॥

[1] *Sūtra* 46 is omitted here and cited after *sūtra* 34 by माधव.

[2] मन्दकुष्ठिः—अ; मण्डलकुक्षी—वैद्यनाथः.

[3] शूद्राचारः—अ.

[4] विज्ञानेश्वर, माधव, वैद्यनाथ and मदनपारिजात cite two *additional* *sūtras* after *sūtra* 52—अन्नापहार्यजीर्णी। ज्ञानापहारी मूकः॥ विज्ञानेश्वर reads आशापहारी for अन्नापहारी.

[5] माधव omits *sūtras* 53 to 56 here and cites them in page 518 (Vol. II.)

[6] चाण्डालीपुल्कसी°—अ; चाण्डालीपुल्कसीगमने अजगरः—विज्ञानेश्वरमाधवमदनपारिजाताः; चाण्डालीपुल्कसीगमकः रजकः—वैद्यनाथः.

The order of citation by माधव is different. *Sūtras* 53 to 56 and 63 are omitted here and cited together in page 518 of (Vol. II).

[7] प्रव्रजितागमने—विज्ञानेश्वरमाधववैद्यनाथमदनपारिजाताः.

[8] शूद्रीगमने—विज्ञानेश्वरः; शूद्रागमने—माधववैद्यनाथमदनपारिजाताः.

[9] दीपघटः—वैद्यनाथः.

[10] सवर्णाभिगामी—विज्ञानेश्वरमाधववैद्यनाथमदनपारिजाताः.

[11] माधव cites *sūtra* 63 after *sūtra* 56. See परा॰ मा॰ प्रा॰, पृ॰ ५१८.

जलहारी[1] मत्स्यः[2] ॥ ५७ ॥

क्षीरहारी[3] [4]बकः ॥ ५८ ॥

[5]वार्धुषिकोऽङ्गहीनः[6] ॥ ५९ ॥

अविक्रेयविक्रयी[7] गृध्रः ॥ ६० ॥

राजमहिषीगामी नपुंसकः[8] ॥ ६१ ॥

राजाक्रोशको[9] गर्दभः ॥ ६२ ॥

[10]गोगामी मण्डूकः ॥ ६३ ॥

अनध्यायेऽध्ययने[11] [12]सृगालः ॥ ६४ ॥

परद्रव्यापहारी परप्रेष्यो [13]भवति[14] ॥ ६५ ॥

1 जलापहारी—माधवः—ibid., p. 515.

2 वैद्यनाथ cites one *additional sūtra* after this—'पञ्चमहापातकानि मिथ्यः'.

3 क्षारहारी—वैद्यनाथः.

4 भषकः—क; बलाकः—विज्ञानेश्वरमाधववैद्यनाथमदनपारिजाताः.

5 *Sūtras* 59 to 64 are omitted by माधव.

6 cf., वार्धुषिको भ्रामरी । विष्णुः, ४५, २६.

7 विक्रेयक्रिया—अ.

8 cf., गत्वा तु राजमहिषीं षण्डो भवति मानवः ।
वृद्धगौतमः, परा. मा. प्रा., पृ. ५२२.

9 दुराक्रोशी—वैद्यनाथः.

10 गो—omitted by भ.

11 अनध्यायाध्ययने—विज्ञानेश्वरः; अनध्यायाध्यायी—वैद्यनाथः.

12 शृगालः—मदनपारिजातः.

13 भवति—omitted by विज्ञानेश्वर, माधव, वैद्यनाथ and मदनपारिजात.

14 cf., परद्रव्यापहारी च भृत्यानां वृत्तिजीवकः । उमामहेश्वरसंवादे, परा. मा. प्रा., पृ. ५१६.

[1]एतादृशैः [2]पापैः स्त्रियोऽप्येतेषामेव जन्तूनां भार्यात्वमुपगच्छन्ति[3] ॥ ६६ ॥

इति द्वितीयप्रश्ने चतुर्थोऽध्यायः

---

## पञ्चमोऽध्यायः

अथ ब्रह्महत्यासमं पातकं[4] गुरूणामप्यधिक्षेपो वेदनिन्दा सुहृद्वधोऽधीतस्य [5]च नाशनम्[6] ॥ १ ॥

अथ सुरापानसमं [7]मत्या लशुनछत्राकविड्वराह[8]ग्रामकुक्कुटपलाण्डुगृञ्जनभक्षणं कौटिल्यं रजस्वलामुखास्वाद[9]श्चतुर्वेदविदहमित्यनृतभाषणं च[10] ॥ २ ॥

[1] विज्ञानेश्वर cites two *additional sūtras* after *sūtra* 65: मत्स्यवधे गर्भवासाः । इत्येतेऽनूर्ध्वगमनाः । याज्ञ. मिता., p. 371; वैद्यनाथ adds only one: *मत्स्यवधे गर्दभः*, p. 862; *मदनपारिजात adds two sūtras : मत्स्यवधे गर्भवासी ; इत्येकेऽनूर्ध्वगामिनः*, p. 702.

[2] प्राप्तै—अ.

[3] cf., स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ॥ मनुः ; १२, ६९.

[4] पातकं वक्ष्यामो गुरूणा०—क.

[5] च—omitted by क.

[6] cf., गुरूणामप्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ याज्ञवल्क्यः, ३, २२८.

[7] मत्स्यलशुन०—क.

[8] ०विड्वराहकुक्कुट०—अ.

[9] चतुर्वेद एव चतुर्वेदोऽहमित्यनृतभाषणं च—क; चतुर्थवेदविदोऽहमित्यनृतभाषणं च—अ.

[10] cf., निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥ याज्ञवल्क्यः, ३, २२९.

अथ सुवर्णस्तेयसमं मनुष्यस्त्रीभूधेनुनिक्षेपाश्वरत्नापहरणं सर्वम्[1] ॥३॥

अथ [2]गुरुतल्पसमं [3]मित्रभार्याकुमारीभगिनीचण्डालीसमानगोत्रास्नुषागमनं प्रत्येकम्[4] ॥ ४ ॥

छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥ मनुः, ५, १९.

Also compare sūtras 1 and 2 with the following :

अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥
ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥ मनुः, ११, ५५-५६.

अत्र याज्ञवल्क्यमनुविष्णूनां ब्रह्महत्यासमसुरापानसमपातकनिर्देशे व्यत्यासो दृश्यते। 'वेदनिन्दा, सुहृद्वधः, अधीतस्य च नाशनम्' इतीमानि ब्रह्महत्यासमान्याह याज्ञवल्क्यः (३,२२८)। 'ब्रह्मोज्झता, वेदनिन्दा, सुहृद्वध' इति तान्येव सुरापानसमान्याह मनुः (११, ५६)। 'उत्कर्षे च वचोऽनृतम्' इति सुरापानसममाह याज्ञवल्क्यः (३,२२९)। 'अनृतं च समुत्कर्षे' इति तदेव ब्रह्महत्यासममाह मनुः (११, ५५)। विष्णुरपि 'कौटसाक्ष्यं सुहृद्वध एतौ सुरापानसमौ' (३६, २) इति सुहृद्वधस्य सुरापानसमत्वमन्ववैति मनुरिव, ब्रह्महत्यासमत्वं च याज्ञवल्क्यः (३, २२८)। "अनृतवचनमुत्कर्षे। राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धः। वेदनिन्दा। अधीतस्य च त्यागः। अभोज्याभक्ष्यभक्षणम्।" (३७, १—५, ७) इत्येतान्युपपातकेषु पठति विष्णुः। सुरापानसमब्रह्महत्यासमेषु याज्ञवल्क्यमनू पठतः। विष्णुपठितानि ब्रह्महत्यासमानि त्वेतद्भिन्नान्येव। 'यागस्थस्य क्षत्रियस्य वैश्यस्य च रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि' (३६, १) इति। अत्र च गौतमधर्मसूत्रपरिशिष्टं याज्ञवल्क्यमतानुरोधि।

[1] cf., अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम् ॥ याज्ञवल्क्यः, ३, २३०.
निक्षेपस्यापहरणं नराश्वरजतस्य च।
भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥ मनुः, ११, ५७.
ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम्। विष्णुः, ३६, ३.

[2] गुरुतल्पगतिसमं—क.

[3] मित्रभार्याकुमारीचाण्डालीभगिनीसमान॰—ख.

[4] cf., सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च।

अथोपपातकानि ॥ ५ ॥

कालेऽनुपनीतता ॥ ६ ॥

गोवधः ॥ ७ ॥

[1]ऋणानामनपाकरणम् ॥ ८ ॥

तथा देवर्षिपितॄणां च ॥ ९ ॥

[2]सत्यधिकारेऽनाहिताग्नित्वम् ॥ १० ॥

[3]लवणादेर्विक्रयः ॥ ११ ॥

ज्येष्ठस्य तिष्ठतः [4]कनीयसो भ्रातुर्विवाहः[5] ॥ १२ ॥

सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम् ॥ याज्ञवल्क्यः, ३, २३१.
रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ मनुः, ११, ५८.

पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम्। पितृष्वसृमातृष्वसृस्वसृगमनं च। श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च। स्वसुः सख्याः सगोत्रायाः उत्तमवर्णायाः कुमार्या अन्त्यजायाः रजस्वलायाः शरणागतायाः प्रव्राजितायाः निक्षिप्तायाश्च ॥ विष्णुः, ३६, ४—७.

[1] ऋणानामपाकरणम्—अ.

[2] सत्राधिकार्यनाहिताग्नित्वम्—अ.

[3] लवणादिविक्रयः—अ.

[4] कनिष्ठभ्रातृविवाहः—अ.

[5] Compare sūtras 6 to 12 with the following:

गोवधो व्रात्यता स्तेयमृणानां चानपाक्रिया।
अनाहिताग्नितापण्यविक्रयः परिवेदनम् ॥ याज्ञवल्क्यः ३, २३४.

'व्रात्यता' ११, ६२; 'गोवधः' ११, ५९; 'ऋणानामनपाक्रिया' ११, ६५; 'अनाहिताग्निता' ११, ६५; 'अपण्यानां च विक्रयः' ११, ६२; 'परिवित्तितानुजेऽनूढे परिवेदनमेव च' ११, ६०—मनुः.

व्रात्यता, ३७, १९; क्षत्रविट्शूद्रगोवधः, ३७, १३; देवर्षिपितृऋणानामनपाक्रिया, ३७, २९; अनाहिताग्निता, ३७, २८; अविक्रेयविक्रयः, ३७, १४; परिवित्तितानुजेन ज्येष्ठस्य, ३७, १५—विष्णुः.

[1]पणपूर्वाध्यापकाध्ययनग्रहणम् ॥ १३ ॥

पणपूर्वाध्यापनं[2] च ॥ १४ ॥

अधिकवृध्युपजीवित्वम् ॥ १५ ॥

लवणस्योत्पादनम्[3] ॥ १६ ॥

स्त्रीशूद्रवधः ॥ १७ ॥

[4]निन्दितार्थोपजीवनम् ॥ १८ ॥

नास्तिक्यम् ॥ १९ ॥

अपत्यानां विक्रयः[5] ॥ २० ॥

धान्यत्रपुसीसपशुपहरणम् ॥ २१ ॥

अयाज्यानां च याजनम् ॥ २२ ॥

पितृमातृसुतत्यागः ॥ २३ ॥

[1] परपूर्वापकारोऽनध्ययनग्रहणम्—अ.

[2] वर्णपूर्वाध्यापने—अ.

[3] Compare sūtras 13 to 16 with the following:

मृतादध्ययनादानं मृतकाध्यापनं तथा ।
[पारदार्यं पारिवित्यं] वार्धुष्यं लवणक्रिया ॥ याज्ञवल्क्यः ३, २३५.

'मृत्या चाध्ययनादानं मृत्याध्यापनमेव च' ११, ६२; 'वार्धुष्यं' ११, ६१—मनुः.

मृताचाध्ययनादानम् । ३७, २१; मृतकाध्यापनम् ३७, २०—विष्णुः.

[4] निन्दितार्थोपजीवनम्—अ, क.

[5] Compare sūtras 17 to 20 with the following:

स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ।
नास्तिक्यं [व्रतलोपश्च] सुतानां चैव विक्रयः ॥ याज्ञवल्क्यः, ३, २३६.

'स्त्रीशूद्रविट्क्षत्रवधो' ११, ६६; 'निन्दितान्नादनं तथा' ११, ६४; 'नास्तिक्यं च' ११, ६६; 'अपत्यस्य च विक्रयः' ११, ६१—मनुः.

क्षत्रविट्शूद्रगोवधः । ३७, १२; विकर्मजीवनम् । ३७, ११; नास्तिकता । ३७, ३१—विष्णुः.

तटाकारामविक्रयः[1] ॥ २४ ॥

कन्यादूषणम् ॥ २५ ॥

आत्मार्थं पाकक्रियारम्भः ॥ २६ ॥

[2]मद्यपस्त्रीसंगमः ॥ २७ ॥

सुतस्य संस्काराकरणम्[3] ॥ २८ ॥

आर्द्रद्रुमच्छेदनम् ॥ २९ ॥

स्त्रियं पण्यत्वेन प्रयोज्य तल्लब्धोपजीवनम् ॥ ३० ॥

स्त्रीधनोपजीवनं च ॥ ३१ ॥

प्राणिवधेन जीवनम् ॥ ३२ ॥

[1] *Compare sūtras 21 to 24 with the following:*

धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ।
पितृमातृसुतत्यागस्तडागारामविक्रयः ॥ याज्ञवल्क्यः; ३, २३७.

'धान्यकुप्यपशुस्तेयम्' ११, ६६; '[गोवधो]ऽयाज्यसंयाज्य[पारदार्यात्मविक्रयाः]' ११, ५९; 'गुरुमातृपितृत्यागः [स्वाध्यायाग्न्योः]सुतस्य च' ११, ५९; '*तडागाराम[दाराणामपत्यस्य च] विक्रयः*' ११, ६१—मनुः.

परस्वापहरणम् । ३७, ८; अयाज्ययाजनम् । ३७, १०; अग्निपितृसुतदाराणां च । ३७, १४—विष्णुः.

[2] मद्यस्त्रीसंगमः—अ.

[3] Compare sūtras 25 to 28 with the following:

*कन्यासंदूषणं चैव [परिविन्दकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥]
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।*
स्वाध्यायाग्निसुतत्यागो [बान्धवत्याग एव च ॥] याज्ञवल्क्यः, ३, २३८—२३९.

'*कन्याया दूषण चैव*' ११, ६१; '*आत्मार्थं च क्रियारम्भः*' ११, ६४; '*मद्यपस्त्रीनिषेवणम्*' ११, ६६; '*सुतस्य च*' ११, ५९—मनुः.

आत्मार्थे क्रियारम्भः । ३७, २७; मद्यपस्त्रीनिषेवणम् । ३७, ३३; अग्निपितृमातृसुतदाराणां च । ३७, ६—विष्णुः.

औषधं दत्वा वशीकरणेन जीवनम् ॥ ३३ ॥

तिलेक्षुपीडाकरणस्य प्रवर्तनम् ॥ ३४ ॥

द्रव्यग्रहणेन [1]परदासीकरणरूपात्मविक्रयः[2] ॥ ३५ ॥

शूद्रसेवनम् ॥ ३६ ॥

हीनेषु मैत्रीकरणम् ॥ ३७ ॥

साधारणस्त्रीसंभोगः ॥ ३८ ॥

[3]अगृहीताश्रमित्वम् ॥ ३९ ॥

[4]परान्नपरिपुष्टता[5] ॥ ४० ॥

[6]असच्छास्त्राभिगमनम् ॥ ४१ ॥

आकरेष्वधिकारिता ॥ ४२ ॥

[7]भार्याया विक्रयः ॥ ४३ ॥

[1] सी in परदासी omitted by क.

[2] Compare sūtras 29 to 35 with the following:

इन्धनार्थं द्रुमच्छेदः स्त्रीहिंस्रौषधिजीवनम् ।
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ॥ याज्ञवल्क्यः, ३, २४०.

'इन्धनार्थमशुष्काणां द्रुमाणामवपातनम्' ११, ६४; 'हिंस्रौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च' ११, ६३; 'महायन्त्रप्रवर्तनम्' ११, ६३; ''आत्मविक्रयाः' ११, ५९—मनुः.

द्रुमगुल्मवल्लीलतौषधीनां हिंसा । ३७, २४; स्त्रिया जीवनम् । ३७, २५; अभिचारमूलकर्मसु प्रवृत्तिः । ३७, २६; महायन्त्रप्रवर्तनम् । ३७, २३—विष्णुः.

[3] स्वयं गृहीताश्रमित्वम्—क.

[4] परान्नपरिपुष्टदेहः—क.

[5] Compare sūtras 36 to 40 with the following:

शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ।
तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥ याज्ञवल्क्यः, ३, २४१.

[6] असच्छास्त्रादिगमनम्—क.

[7] भार्याविक्रयः—क.

एकैकमुपपातकम्[1] ॥ ४४ ॥

उपपातके[2] तुरीयं पातके[3] सहस्रं महापातके द्विगुणं नरकं वर्षसंख्यया[4] ॥ ४५ ॥

महापातकतां प्राप्नोत्यावृत्तमुपपातकम्[5] ॥ ४६ ॥

एवं[6] [7]जातिभ्रंशकरादिभिः[8] ॥ ४७ ॥

इति द्वितीयप्रश्ने पञ्चमोऽध्यायः

---

[1] Compare sūtras 41 to 44 with the following:

असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥ याज्ञवल्क्यः, ३, २४२.

'असच्छास्त्राधिगमनम्' ११, ६६; 'सर्वाकरेष्वधीकारः' ११, ६३; 'तडागारामदाराणामपत्यस्य च विक्रयः' ११, ६१; 'उपपातकम्', ११, ६६—मनुः.

असच्छास्त्राभिगमनम् । ३७, ३०; सर्वाकरेष्वधीकारः । ३७, २२; अविक्रेयविक्रयः । ३७, २१; इत्युपपातकानि । ३७, ३४—विष्णुः.

[2] उपपातके—omitted by अ.

[3] पातकसहस्रं—अ.

[4] cf., पातकेषु सहस्रं स्यान्महत्सु(त्सु)द्विगुणं तथा ।
उपपातके तुरीयं स्यान्नरकं वर्षसंख्यया ॥ अङ्गिराः, याज्ञ. मिता., ३, २३३. पृ. ३८४.

[5] cf., "युक्तमुपपातकादेरभ्यासापेक्षया पतनहेतुत्वम्"—याज्ञ. मिता., ३, २३४-२४२.

[6] इदं—क.

[7] जातिभ्रंशकरादि—क.

[8] cf., "एवं गोवधादीनां प्रत्येकमुपपातकसंज्ञा वेदितव्या । मनुना (११, ६७-७०) पुनरन्यान्यपि निमित्तानि जातिभ्रंशकरसंकरीकरणापात्रीकरणमलिनीकरणसंज्ञानि परिगणितानि ॥" याज्ञ. मिता., ३, २३४-२४२; पृ. ३८३.

## षष्ठोऽध्यायः

मातृगमनदुहितृगमनस्नुषागमनानि [1]प्रत्येकमतिपातकानि[2] ॥ १ ॥

स्वसृसख्याः[3] सगोत्राया उत्तमवर्णाया रजस्वलाया: प्रव्रजितायाः शरणागताया [4]निक्षिप्तायाश्च गमनं प्रत्येकमनुपातकानि[5] ॥ २ ॥

ब्राह्मणस्य [6]रुजःकरणमघ्रेयमद्ययोर्घ्रातिर्मत्या जैह्म्यं [7]पशौ पुंसि च मैथुनकरणमित्येतानि जातिभ्रंशकराणि[8] ॥ ३ ॥

मृगेभाजाविमीनाहि[9]महिषीवधः [10]संकरीकरणम्[11] ॥ ४ ॥

निन्दितेभ्यो धनादानं शूद्रसेवनं वाणिज्यं कुसीदजीवनमसभ्य-

[1] प्रत्येकमतिपातकानि स्युः—क.

[2] cf., मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि । विष्णुः, ३४, १.

[3] स्वसृसख्यायाः—अ; सख्यायाः—क.

[4] नि in निक्षिप्तायाश्च omitted by क.

[5] cf., स्वसुः सख्याः सगोत्राया उत्तमवर्णायाः कुमार्या अन्त्यजाया रजस्वलायाः प्रव्रजितायाः शरणागताया निक्षिप्तायाश्च । अनुपातकिनस्त्वेते etc.—विष्णुः, ३६, ७–८.

[6] रजः for रुजः—अ.

[7] पशुपुंसि च—अ.

[8] cf., ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥ मनुः, ११, ६७.

ब्राह्मणस्य रुजस्करणम् । अघ्रेयमद्ययोर्घ्रातिः । जैह्म्यम् । पशुषु मैथुनाचरणम् । पुंसि च । इति जातिभ्रंशकराणि ॥ विष्णुः, ३८, १–६.

[9] The portion from 2 to 4 omitted by क.

[10] संकलीकरणम्—अ and क.

[11] cf., खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ मनुः, ११, ६८

ग्राम्यारण्यानां पशूनां हिंसा संकरीकरणम् । विष्णुः, ३९, १.

भाषणमपात्रीकरणम्[1] ॥ ५ ॥

[2]पक्षिजलचरकृमिकीटघातनं[3] जलजसूदनं [4]मद्यानुगतभोजनानि [5]फलेन्धनकुसुमस्तेयमित्येतन्मलिनीकरणमुच्यते[6] ॥ ६ ॥

[7]अतोऽन्यदनुक्तं पापजातं[8] प्रकीर्णकमिति कथ्यते[9] ॥ ७ ॥

अथ[10] महापातकादीनां प्रायश्चित्तं संक्षेपेण[11] कथ्यते ॥ ८ ॥

ब्रह्महा शिरःकपाली ध्वजवानन्यच्छिरःकपालं[12] दण्डाग्रसमारोपितं[13] कृत्वा भिक्षाशी कर्म वेदयन्[14] स्वव्यापादितशिरःकपालात्मकध्वजवान्[15] तदलाभेऽन्यस्य[16] ब्राह्मणस्यैव[17] शिरःकपालं धृत्वा द्वादशाब्दानि कुटीं

1 cf., निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ मनुः, ११, ६९.
निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्यभाषणं शूद्रसेवनमित्यपात्रीकरणम् । विष्णुः, ४०, १.

2 कुक्षि for पक्षि—अ.

3 ०घातजलजन्तूदनं—अ.

4 मद्यानुगतो भोजनानि—अ.

5 फलैधःकुसुम०—क.

6 cf., कृमिकीटवयोहत्या मद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यं च मलावहम् ॥ मनुः, ११, ७०.
पक्षिणां जलचराणां जलजानां च घातनम् । कृमिकीटानां च । मद्यानुगतभोजनम् । इति मलावहानि ॥ विष्णुः, ४१, १-४.

7 ततोऽन्यदनुक्तं—क.

8 पातकजातं—क.

9 cf., यदनुक्तं तत्प्रकीर्णकम् । विष्णुः, ४२, १.

10 अथ—omitted by अ.

11 संक्षेपेण—अ.

12 ध्वजवान् यच्छिरःकपालं—क.

13 दण्डाग्रे समारोपितं—क.

14 वेदयन्—omitted by अ.

15 ध्वजवान् for ध्वजवान्—अ.

16 तदलाभेनास्य—अ.

17 ब्राह्मणस्यैव—अ.

कृत्वा वने 'वसेत्[1] ॥ ९ ॥

वालवासी जटी[3] वृक्षमूले वसेत्[4] ॥ १० ॥

लोहितकेन मृन्मयखण्डशरावेण भिक्षार्थं ग्रामं[5] प्रविशेत् ॥ ११ ॥

सप्तागाराण्येव द्वारि[6] स्थितो भिक्षां याचेत[7] ॥ १२ ॥

[1] वसेद्वा—अ.

[2] cf., शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात् ॥ याज्ञवल्क्यः, ३, २४३.
ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत् ।
भैक्षाश्यात्मविशुध्यर्थं कृत्वा शवशिरोध्वजम् ॥ मनुः, ११, ७२.

अरण्ये कुटीं कृत्वा वाग्यतः शवशिरोध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥ आपस्तम्बः, १, २४, ११.

कपाली खट्वाङ्गी गर्दभचर्मवासा अरण्यनिकेतनः श्मशाने ध्वजं शवशिरः कृत्वा कुटीं कारयेत् तामावसेत् . . . . . . . स्वकर्माचक्षाणः ॥ बोधायनः, २, १, ३.

. खट्वाङ्गकपालपाणिर्वा द्वादशसंवत्सरान् ब्रह्मचारी भैक्ष्याय ग्रामं प्रविशेत्कर्माचक्षाणः ॥ गौतमः, २२, ३.

[3] आहवजटी for वालवासा जटी—अ.

[4] cf., कृतवापनो वा निवसेद्ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः ॥ मनुः, ११, ७८.

"कृतवापनो वेति विकल्पाज्जटी वेति लक्ष्यते । अत एव संवर्तः—
ब्रह्महा द्वादशाब्दानि वालवासा जटी ध्वजी ॥ इति "—याज्ञ. मिता., ३, ३४३ पृ. ३८४.

कपाली खट्वाङ्गी गर्दभचर्मवासा etc.—बोधायनः, २, १, ३.

[5] मृन्मयखण्डशरावेण भिक्षाचरणं ग्रामं—क.

[6] यतवागरण्ये द्वारि—अ.

[7] Compare sūtras 11 and 12 with the following·
खण्डेन लोहितकेन शरावेण ग्रामे प्रतितिष्ठेत । कोऽभिशस्ताय भिक्षामिति सप्तागारं चरेत् ॥ आपस्तम्बः, १, २४, १४–१५.

. . . . . . सप्तागाराणि भैक्ष चरन् स्वकर्माचक्षाणस्तेन प्राणान् धारयेत् ॥ बोधायनः, २, १, ३.

मितभुक् शुद्धिमाप्नुयात्[1] ॥ १३ ॥
ततः सेतुस्नानं कुर्वीत[2] ॥ १४ ॥
ब्राह्मणेभ्यो[3] गोभूतिलहिरण्यादिकं दद्यात्[4] ॥ १५ ॥
ततः पूतो [5]भवत्यकामतः ॥ १६ ॥
कामतश्चेद्भृग्वग्निपतनं निर्दिष्टम्[6] ॥ १७ ॥

इति द्वितीयप्रश्ने षष्ठोऽध्यायः

---

[1] cf., 'मितभुक् शुद्धिमाप्नुयात्' याज्ञवल्क्यः, ३, २४३.
'ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः' मनुः, ११, ७५.

[2] cf., रामचन्द्रसमादिष्टं नलसंचयसंचितम् ॥
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।
सेतुं दृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम् ॥ पराशरः, १२, ६९–७०.

[3] *ब्राह्मणेभ्यो—omitted by अ; ब्राह्मणे—क.*

[4] cf., पात्रे धनं वा पर्याप्तं दत्वा शुद्धिमवाप्नुयात् । याज्ञवल्क्यः, ३, २५०.
सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥ मनुः, ११, ७६.

[5] भवति । सकामतश्चेद्भृग्वग्नौ पतनं नदीष्वपिनं—अ.

[6] Compare sūtras 16 and 17 with the following:
प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्यस्तु वचनादिह जायते ॥ याज्ञवल्क्यः, ३, २२६.
इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
*कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥ मनुः, ११, ८९.*
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ मनुः, ११, ७३.
प्रायश्चित्तमग्नौ सक्तिर्ब्रह्मघ्नस्त्रिरवच्छातस्य ॥ गौतमः, २२, १.
न कामतो महापापं नरः कुर्यात्कथंचन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥
अङ्गिराः, याज्ञ. मिता, ३, २४७ ; पृ. ३९२.

## सप्तमोऽध्यायः

सुराप सुराम्बुघृतगोमूत्रपयसामन्यतममग्निस्पर्शाद्दाहशक्तिकं कृत्वा[1] पीत्वा मरणाच्छुद्धिमाप्नुयात्[2] ॥ १ ॥

ब्राह्मणस्य [3]माधूकमैक्षव ताल खार्जूर पानस द्राक्ष मधूत्थ सैर मारिष्ट[4] मैरय[5] [6]नारिकेलजमेकादशमद्यानि निषिद्धानि [7]कामत [8] ॥ २ ॥

[9]अकामतश्चेद्वालवासा जटी वृक्षमूले ब्रह्महत्याव्रतं चरेत् ॥ ३ ॥

[1] ०पयसामन्यतममग्नेः स्पर्शाद्दाहशक्ति पक्वं कृत्वा—अ

[2] cf सुराम्बुघृतगोमूत्रपयसामग्निसन्निभम् ।
सुरापोऽन्यतमं पीत्वा मरणाच्छुद्धिमाप्नुयात् ॥ याज्ञवल्क्य, ३, २५३.
सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥
गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा ।
पयो घृतं वामरणाद्गोशकृद्रसमेव वा ॥ मनु ११, ९०–९१

[3] मधूकमैक्षव—क

[4] सैरमारिष्ट—omitted by क

[5] सैरमादिष्टमैरेय—अ

[6] नारिकेल्मजमेकादशमद्यानि—क

[7] कामतश्चेद्वा—अ

[8] cf पानसं द्राक्षं माधूकं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव तु ॥ पुलस्त्य, याज्ञ मिता, ३
२५३, पृ ३९७
यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ मनु, ११, ९५

[9] वासोपजीवितब्रह्महत्याव्रत—अ

पिण्याकं तण्डुलावयवान्वा[1] त्रिवर्षं निशि भक्षयेत्[2] ॥ ४ ॥

त्रयो वर्णा अज्ञानात्तु रेतोविण्मूत्रं सुरां पीत्वा पुनःसंस्कारमर्हन्ति[3] ॥ ५ ॥

मद्यभाण्डस्थितं[4] तोयमज्ञानाद्यदि कश्चिद्द्विजः पिबेत् पद्मोदुम्बरबिल्व[5]पलाशकुशोदकं पीत्वा त्रिरात्रेण शुध्यति[6] ॥ ६ ॥

[1] तण्डुलं वा—अ.

[2] Compare sūtras 3 and 4 with the following:

वालवासा जटी वापि ब्रह्महत्याव्रतं चरेत् ।
पिण्याकं वा कणान्वापि भक्षयेत्त्रिसमा निशि ॥ याज्ञवल्क्यः, ३, २५४.
कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि ।
सुरापानापनुत्यर्थं वालवासा जटी ध्वजी ॥ मनुः, ११, ९२.

[3] cf., अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ याज्ञवल्क्यः, ३, २५५.
अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ मनुः, ११, १५०.
अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुध्यति ॥ मनुः, ११, १४६.

अमत्या पाने पयोघृतमुदकं वायुं प्रतित्र्यहं तप्तानि स तप्तकृच्छ्रः । ततोऽस्य संस्कारः । मूत्रपुरीषरेतसां च प्राशने ॥ गौतमः, २३, २–४.

Also compare with वसिष्ठः, २०, २२–२३; and बोधायनः, २, १, २०.

[4] मद्यभाण्डान्वितं—अ.

[5] पालाश for पलाश—अ.

[6] cf., मद्यभाण्डस्थितं तोयं यदि कश्चिद्द्विजः पिबेत् ।
पद्मोदुम्बरबिल्वपलाशानामुदकं पीत्वा त्रिरात्रेण विशुध्यति ॥
वसिष्ठः, २०, २४.

ज्ञानतः पञ्चरात्रं शङ्खपुष्पीशृतं पयः[1] पिबेत्[2] ॥ ७ ॥

सुरापानसमे[3] लशुनादिभक्षणेऽर्धप्रायश्चित्तं[4] चरेत्[5] ॥ ८ ॥

सुवर्णस्तेनः[6] प्रकीर्णकेश[7] आर्द्रवासा[8] आयसं मुसलं स्कन्धे निधाय राजानमुपतिष्ठेदिदं[9] पापं मया कृतमनेन मुसलेन घातयस्वेति ॥९॥

स राज्ञा[10] सकृद्धननाच्छिक्षितः सन् पूतो भवतीत्येवं सकृत्ताडनेन हतो मृतः शुध्येत ॥ १० ॥

[1] शङ्खपृष्ठतः पयः—अ; शङ्खपुष्पश्रितं पयः—क.

[2] cf., अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पीश्रितं पयः ॥ मनुः, ११, १४७.

अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत् । मद्यभाण्डस्थाश्च पञ्चरात्रम् ॥ विष्णुः, ५१, २३–२४;

"ज्ञानतः पाने तु विष्णूक्तम्—मद्यभाण्डस्थितं तोयं पीत्वा" etc. याज्ञ. मिता., ३, २५५; पृ. ४०१–४०२.

[3] सुरापानसमं—अ and क.

[4] लशुनादिभक्षणेऽथ प्रायश्चित्त चरेत्—अ.

[5] cf., छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥ मनुः, ५, १९
गर्हितानाद्ययोर्जग्धि सुरापानसमानि षट् । मनुः, ११, ५६.

तत्र स्वभावदुष्टलशुनगृञ्जनछत्राकविड्वराहग्रामकुक्कुटपलाण्डूनां प्रत्येकममत्या सकृद्भक्षणे सांतपनम् । अभ्यासे यतिचान्द्रायणम् । मत्या सकृच्चैवान्द्रम् । अभ्यासे तदावृत्तिः । अत्यन्ताभ्यासे सुरापानसमं प्रायश्चित्तम् । अन्ते पुनरुपनयनमेतेषु सर्वत्र । . . . . सर्वत्र तत्कालछर्दितेऽर्धप्रायश्चित्तम् ॥ प्रायश्चित्तेन्दुशेखरः, पृ. ६१.

[6] सुवर्णस्तेयेन—अ.

[7] प्रकीर्णेन—अ

[8] आर्द्रवाससा—अ.

[9] आयसमुसलं स्कन्धेनादाय राजानमवतिष्ठन्निदं—अ.

[10] राजा—अ; राज्ञः—क

मुक्तो वा जीवन्नपि स्तेनस्तेयाद्विमुच्यते[1] ॥ ११ ॥

अकामेन कृत यत्पाप[2] तत्कामाद्विगुण[3] भवेत्[4] ॥ १२ ॥

[1] Compare sūtras 9 to 11 with the following

ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत् ।
स्वकर्म ख्यापयस्तेन हतो मुक्तोऽपि वा शुचि ॥ याज्ञवल्क्य, ३, २५७
सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ।
स्वकर्म ख्यापयन् ब्रूयान्मा भवाननुशास्त्विति ॥
गृहीत्वा मुसल राजा सकृद्धन्यात्तु त स्वयम ।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव तु ॥ मनु, ११, ९९–१००

सुवर्णस्तेयकृद्राज्ञे कर्माचक्षाणो मुसलमर्पयेत । वधात्त्यागाद्वा पूतो भवति ॥ विष्णु, ५२, १–२

स्तेन प्रकीर्णकेशोऽसे मुसलमाधाय राजान गत्वा कर्माचक्षीत तेनैन हन्यात् । वधे मोक्ष ॥ आपस्तम्ब, १, २५ ४

स्तेन प्रकीर्य केशान् सैध्रक मुसलमादाय स्कन्धेन राजान गच्छेदनेन मा जहीति तेनैन हन्यात् । अथाप्युदाहरन्ति—स्कन्धेनादाय मुसल राजानमन्वियात् । अनेन शाधि मा राजन् क्षत्रधर्ममनुस्मरन् । *शासने वा विसर्गे वा स्तेनो मुच्येत किल्बिषात्* ॥ बोधायनः, २, १, १५–१६

सुवर्णस्तेन प्रकीर्णकेश आर्द्रवासा आयस मुसलमादाय राजानमुपतिष्ठेदिद पाप मया कृतमनेन मुसलेन मा घातयस्वेति स राज्ञा शिष्ट सन् पूतो भवति ॥ शङ्ख, याज्ञ मिता, ३ २५७, पृ ४०३

एव सकृत्ताडनेन राज्ञा हतो मृत शुध्येत्, मुक्तो वा मरणाज्जीवन्नपि विशुध्येदिति यावत् । याज्ञ मिता ३ २५७, पृ ४०३

स्तेन प्रकीर्णकेशो मुसली राजानमियात्कर्माचक्षाण । पूतो वधमोक्षाभ्याम् ॥ गौतम, १२, ४०–४१

[2] अकामनकृत यत्पाप यत्—क

[3] तत्कामादिद्विगुण—अ

[4] cf विहित यदकामाना कामात्तद्द्विगुण भवेत् ॥
देवल, याज्ञ मिता, ३ २२६ पृ ३७५, अपरार्क, पृ १०५९

अज्ञानाकामकृत यदुक्त ज्ञानकामकृते तद्द्विगुणम् । प्रायश्चित्तेन्दुशेखर, पृ २

जालसूर्यमरीचिस्थं[1] [2]त्रसरेणुः ॥ १३ ॥

रजांस्यष्टौ लिक्षा ॥ १४ ॥

तास्तिस्रो राजसर्षपः ॥ १५ ॥

ते[3] त्रयो गौरः ॥ १६ ॥

षट्कं यवमध्यमः[4] ॥ १७ ॥

ते[5] त्रयः कृष्णलः ॥ १८ ॥

पञ्च ते माषः ॥ १९ ॥

ते षोडश सुवर्णः[6] इति[7] ॥ २० ॥

[1] बालसूर्यमरीचिस्थं—क.

[2] त्रसरेणुरजोऽस्याष्टौ वा तिस्रो राजसर्षपः—अ; त्रसरेणुरजांस्यष्टौ तास्तिस्रो राजसर्षपः—क.

[3] ते—omitted by अ.

[4] षण्मयममध्यमः—क; षट्क यवमध्यस्थम्—अ.

[5] ते—omitted by अ.

[6] सुवर्ण—अ.

[7] Compare sūtras 13 to 20 with the following

जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥ याज्ञवल्क्यः, १, ३६२–३६३.
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥
सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥ मनुः, ८, १३१–१३४.

[1]तन्मात्रहरणं महापातकम्[2] ॥ २१ ॥

इति द्वितीयप्रश्ने सप्तमोऽध्यायः

---

# अष्टमोऽध्यायः

कामतो गुरुतल्पगामी सवृषणं शिश्नं [3]परिवास्याञ्जलावाधाय दक्षिणां [4]दिशमनावृत्ति व्रजेत् ॥ १ ॥

ज्वलितां वा सूर्मि परिष्वज्य समाप्नुयात्[5] ॥ २ ॥

[1] तन्माव्रहरण महापातकमिति—क, तस्मात्तस्य हरण महापातकम्—अ

[2] cf. अत षोडशमाषात्मकसुवर्णपरिमितहेमहरण एव महापातकित्व तन्निमित्तं मरणान्तिकादिप्रायश्चित्तविधान च । द्वित्रिमाषात्मकहेमहरणं तु क्षत्रियादिहेमहरणवदुपपातकमेवेति युक्तम् । किं च सुवर्णान्न्यूनपरिमाणहेमहरणे प्रायश्चित्तान्तरोपदेशात्तत्परिमाणस्यैव हेम्नो हरणे मरणान्तिकादिप्रायश्चित्तमिति युक्तम् ॥ याज्ञ मिता., ३, २५७; १ ४०४.

[3] परिवास्याञ्जलावादाय—क

[4] दिशमनावृत्तिर्व्रजेत्—अ

[5] Compare sūtras 1 to 2 with the following

तप्तेऽय शयने सार्धमायस्या योषिता स्वपेत् ।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां चोत्सृजेत्तनुम् ॥ याज्ञवल्क्य, ३, २५९.

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये ।
सूर्मि ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति ॥
स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैर्ऋतीं दिशमातिष्ठेदानिपातादजिह्मग ॥ मनु, ११, १०३–१०४.

गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् । ज्वलितां वा सूर्मि परिष्वज्य समाप्नुयात् ॥ आपस्तम्ब, १, २५, १–२

तप्ते लोहशयने गुरुतल्पग शयीत । सूर्मि वाश्लिष्येज्ज्वलन्तीम् । लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्ममाशरीरनिपातनात् । मृत शुध्येत् ॥ गौतम, २३, ९–११

अकामतः सापत्न्यमातृगमने द्वादशवार्षिकं चरेत्[1] ॥ ३ ॥

गुरुतल्पसमे[2] चण्डालादिगमने नववार्षिकं कामतः[3] ॥ ४ ॥

अकामतश्चेचान्द्रायणद्वयम्[4] ॥ ५ ॥

एतच्च सकृद्गमने[5] ॥ ६ ॥

तत्र चेदं 'तप्तेऽयःशयने सार्धमायस्या' इत्याद्युक्तं मरणान्तिकं प्रायश्चित्तद्वयम्। तच्च जनन्यामकामकृते। तत्सपत्न्यां तु सवर्णायामुत्तमवर्णायां च कामकृते द्रष्टव्यम् ॥

पितृभार्यां तु विज्ञाय सवर्णां योऽधिगच्छति।
जननीं चाप्यविज्ञाय ना मृतः शुद्धिमाप्नुयात् ॥

इति षट्त्रिंशन्मते ऽभिधानात् ॥ याज्ञ. मिता., ३, २५९; पृ. ४०८.

[1] cf., यत्तु शङ्खेन द्वादशवार्षिकमुक्तम्:
अधःशायी जटाधारी पर्णमूलफलाशनः।
एककालं समश्नीत वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥ १७, १-३.
इति, तत्समवर्णोत्तमवर्णपितृदारगमने, अकामकृते वा द्रष्टव्यम् ॥ याज्ञ. मिता., ३, २५९, पृ. ४०९.

[2] गुरुतल्पसमं—अ.

[3] cf., रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ मनुः, ११, ५८.
अतिदिष्टेषु सर्वत्र पादोनव्रतमाचरेत् ॥ उशनाः, हेमाद्रिः, प्रायश्चित्तकाण्डम्. पृ.९९६.

[4] cf., अज्ञानतश्चान्द्रायणद्वयं कुर्यात् ॥ विष्णुः, ५३, ६.
चण्डालपुल्कसानां च भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ यमः, श्लो. २८.

[5] cf., यदा पुनर्ज्ञानतोऽज्ञानतो वा चण्डाल्याः सकृद्गच्छति तदा—
चण्डालपुल्कसानां तु भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥
इति यमाद्युक्तं संवत्सरं कृच्छ्रानुष्ठानं चान्द्रायणद्वयं यथाक्रमेण द्रष्टव्यम् ॥ याज्ञ. मिता., ३, २६०, पृ. ४११-४१२.

अत्यन्ताभ्यासे[1] त्वग्निप्रवेशः[2] ॥ ७ ॥

धान्यानां हरणे कृच्छ्रम्[3] ॥ ८ ॥

तिलानामैन्दवम् ॥ ९ ॥

रत्नानां चान्द्रायणम् ॥ १० ॥

ऋणानामनपाकरणे[4] सति सामर्थ्येऽनाहिताग्निताया चान्द्रायणम्[5] ॥ ११ ॥

[6]लाक्षालवणमधुमांसतैलक्षीरदधिघृततक्रचर्मगन्धवासोर्णाकेशकेसरिभूधेनुवेश्माश्म[7]शस्त्रविक्रये चान्द्रायणं धेनुचतुष्टयं च[8] ॥ १२ ॥

[1] संतताभ्यासे—अ ; त्वत्यन्ताभ्यासे—क

[2] cf., तथा—

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥ ११, १७५.

इति चण्डालादिसाम्यं प्रतिपादयता मनुनापि कामतोऽत्यन्ताभ्यासे मरणान्तिकं दर्शितम् । .... मरणान्तिकं चाग्निप्रवेशनम् । याज्ञ. मिता., ३, २६०, पृ. ४११, ४१२.

[3] cf., धान्यान्नधनचौर्याणि कृत्वा कामाद्द्विजोत्तमः ।
स्वजातीयगृहादेव कृच्छ्राब्देन विशुध्यति ॥ मनु, ११, १६२.
धान्यधनापहारी च कृच्छ्रमब्दम् । विष्णु, ५२, ५.

[4] ऋता मनसाकरणे—अ , ऋणयानामनपाकरणे—क.

[5] Compare with sūtras 9 to 11
[गोवधो व्रात्यता] स्तेयमृणानां चानपाक्रिया । याज्ञवल्क्य, ३, २३४.
उपपातकशुद्धिः स्यादेवं चान्द्रायणेन तु ॥ याज्ञवल्क्य., ३, २६५

कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् ।
चान्द्रायणं चरेद्वर्षं प्रतिमासमहोऽपि वा ॥
काष्णाजिनि., याज्ञ मिता., ३, २६५, पृ. ४२६.

[6] क्षार for लाक्षा—अ

[7] वस्त्र for शस्त्र—अ.

[8] cf., सर्वान् रसानपोहेत कृतान्नं च तिलैः सह ।
अश्मनो लवणं चैव पशवो ये च मानुषाः ॥

[1]अत्यन्ताभ्यासे [2]चोपनयत्[3] ॥ १३ ॥

ये ब्राह्मणाधमा यद्रव्य[4] गर्हितेन [5]कर्मणार्जयन्ति [6]तद्रव्योत्सर्गेण [7]शुध्यन्ति ते जप्यन तपसा वा[8] ॥ १४ ॥

भृतकाध्ययने[9] च त्रिरात्र पयसा [10]ब्राह्मी[11]सुवर्चला पिबेत्[12] ॥

अप शस्त्र विष मास सोम गन्धाश्च सर्वश ।
क्षीर क्षौद्र दधि घृत तैल मधु गुड कुशान् ॥ मनु , १०, ८६ and ८८
मांसलवणलाक्षाक्षीरविक्रयी चान्द्रायण कुर्यात् ॥ विष्णु , ५४, २१
लाक्षालवणमधुमासतैलक्षीरदधितक्रघृतगन्धचर्मवाससामन्यतमविक्रये चान्द्रायणम् ।
तथा—ऊर्णाकेशकेसरिभूधेनुवेदसारमशस्त्रविक्रय च ॥ हारीत , याज्ञ मिता , ३, २६५, पृ ४२६

[1] अत्यन्ताभ्यासेन चोपनयने—क

[2] चोपनयनम्—अ

[3] cf , त च भूयश्चोपनयेत् ॥ विष्णु , ५४, २२

[4] इद ब्राह्मणाधमाय द्रव्य—अ , ये ब्राह्मणाधमाय द्रव्य—क

[5] कर्मणार्जयति—अ

[6] तद्रव्यस्य उत्सर्गेण—क

[7] शुध्यति—क

[8] cf , यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥
मनु , ११, १९३ , विष्णु , ५४, २८

[9] भृतकाध्ययनेन—क

[10] ब्राह्मणीं—अ, क

[11] सुवर्चलां—omitted by क

[12] cf , तथा 'भृतकाध्यापकभृतकाध्यापितयोश्च पयसा ब्रह्मसुवर्चला पिबेत्' इत्यधिकृत्य विष्णुनोक्तम्—

भृतकाध्यापन कृत्वा भृतकाध्यापितस्तथा ।
अनुयोगप्रदानेन त्रीन् पक्षाञ्छियत पिबेत् ॥ इति, याज्ञ मिता , ३, २६५, पृ ४२७,

भृतकाध्ययनाध्यापितयोर्हारीत आह—

भृतकाध्यापन कृत्वा भृतकाध्यापितश्च य ।
अनुयोगप्रदानेन त्रीन् पक्षाञ्छियत पिबेत् ॥ परा मा प्रा , पृ ४३४

जातिमात्रब्राह्मणीगमने[1] कामतो[2] वार्षिकम्[3] ॥ १६ ॥

श्रोत्रियभार्यागुणवतीगमने[4] त्रैवार्षिकम्[5] ॥ १७ ॥

एतत्सर्वमृतुकालविषयम्[6] ॥ १८ ॥

अनृतौ तु त्रैमासिकमेव[7] ॥ १९ ॥

द्वित्रिव्यभिचारिब्राह्मणीगमने प्राजापत्यद्वयम् ॥ २० ॥

अकामतस्त्वेक[8] प्राजापत्यम्[9] ॥ २१ ॥

[1] *जातिमात्रब्राह्मण्या गमने*—अ

[2] कामतो वा—अ

[3] cf, खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने ।
प्राजापत्य चरेत्कृच्छ्रमब्दमेक समाहित ॥ मनु, ११, १०५

[4] श्रोत्रियभार्यागुणवतीगमने—क

[5] cf द्वे परदारे । त्रीणि श्रोत्रियस्य ॥ गौतम, २२, ३१–३२

[6] Compare sūtras 16 to 18 with the following
तत्रेय व्यवस्था । ऋतुकाले कामतो जातिमात्रब्राह्मणीगमने वार्षिक प्राकृत ब्रह्मचर्यम् । *तस्मिन्नेव काले कमधायनत्वादिगुणशालिन्या ब्राह्मण्या गमने* द्वे वर्षे प्राकृत ब्रह्मचर्यम् । तादृश्या एव श्रोत्रियभार्याया गमने त्रीणि वर्षाणि प्राकृत ब्रह्मचर्यम् । यद्वा श्रोत्रियपत्न्यां गुणवत्यां ब्राह्मण्यां त्रैवार्षिकम् ॥ याज्ञ मिता, ३, २६५, पृ ४२७

[7] cf अनृतुकाले तु जातिमात्रब्राह्मण्या कामतो गमने मानव त्रैमासिकम् ॥ याज्ञ मिता, ३ २६५, पृ ४२७–४२८
*चान्द्रायण वा त्रीन् मासानभ्यसेन्नियतेन्द्रिय* ॥ मनु, ११, १०६

[8] अकामकर्तृक—अ अमतस्यैक—क

[9] Compare sutras 20 and 21 with the following
ब्राह्मणश्चेद प्रेक्षापूर्वक ब्राह्मणदारानभिगच्छेतनिवृत्तधर्मकर्मण कृच्छ्रो ऽनिवृत्तधर्मकर्मणोऽतिकृच्छ्र ' इति तद्ब्राह्मणभार्याया शूद्रायां द्रष्टव्यम् । द्विजातिस्त्रीषु वा विप्रोढासु द्वित्रिर्व्यभिचरितासु अबुद्धिपूर्वगमने वा । तथा च सवर्त —' विप्रामस्वजना गत्वा प्राजापत्य समाचरेत्' (श्लो १५५) इति । कामतस्तु—
राज्ञीं प्रव्रजिता धात्रीं साध्वीं वर्णोत्तमामपि ।
कृच्छ्रद्वय प्रकुर्वीत सगोत्रामभिगम्य च ॥ (श्लो ३६)
इति यमोक्त कृच्छ्रद्वय द्रष्टव्यम् ॥ याज्ञ मिता ३ २६५, पृ ४२८

चतुर्व्यभिचारे[1] स्वैरिणी भवति[2] ॥ २२ ॥

तद्गमने त्रिरात्रोपोषणं घृतपात्रदानं [3]च[4] ॥ २३ ॥

पञ्चव्यभिचारे[5] बन्धकी[6] ॥ २४ ॥

तद्गमने किंचिद्दद्यात्[7] ॥ २५ ॥

अष्टमुष्टि भवेत्किञ्चिदिति[8] ॥ २६ ॥

विधवां व्रतस्था गत्वा संवत्सरं चरेत्[9] ॥ २७ ॥

गर्भकरणे द्विगुणम्[10] ॥ २८ ॥

इति द्वितीयप्रश्नेऽष्टमोऽध्यायः

---

[1] चतुर्व्यभिचारी—क

[2] cf, चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेत् ॥ स्मृत्यन्तरे, याज्ञ. मिता., पृ. ४२८; परा. मा. प्रा., पृ. २७०.

[3] च—omitted by क.

[4] cf, स्वैरिण्या तु वृषस्यामवकीर्ण. सचैलस्नात उदकुम्भ दद्यात् ॥ शङ्खलिखितौ, याज्ञ मिता; पृ. ४२८; परा. मा. प्रा, पृ. २६९; स्मृ. मु., पृ. ८८८.

[5] पञ्चव्यभिचारी—अ; पञ्चमव्यभिचारी—च.

[6] cf, चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेत् ॥ स्मृत्यन्तरे, याज्ञ. मिता., ३, २६५; पृ. ४२८.

[7] cf, ब्राह्मणीं बन्धकीं गत्वा किंचिद्दद्याद्द्विजातये ॥ षट्त्रिंशन्मते, याज्ञ. मिता., ३, २६५, पृ ४२८; परा. मा. प्रा, पृ २७८; षड्त्रिंशे, स्मृ. मु., पृ ८८८

[8] cf., अष्टमुष्टि भवेत्किंचित् किंचिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥ प्रायश्चित्तेन्दुशेखरः, पृ. ३९.

[9] cf, विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ।
व्रतस्थागमने कृच्छ्रं सपाद तु समाचरेत् ॥ चतुर्विंशतिमते, परा. मा. प्रा., पृ २७१; स्मृ. मु, पृ. ८८८.

[10] cf., गमने तु व्रत यत्स्याद्गर्भे तद्द्विगुण भवेत ॥ उशना, याज्ञ मिता., ३. २६५; पृ. ४२८; परा. मा. प्रा, पृ. २७०; स्मृ. मु, पृ. ८८८.

## नवमोऽध्यायः

कामतः [1]स्वैरिशूद्रागमने सचैलस्नात उदकुम्भं दद्यात् ॥ १ ॥

वैश्यागमने[2] चतुर्थकालाहारो[3] ब्राह्मणान् भोजयेत् ॥ २ ॥

क्षत्रियागमने[4] त्रिदिनमुपोष्य [5]यवाढकं दद्यात्[6] ॥ ३ ॥

तत्र गर्भोत्पत्तौ द्विगुणं चरेत्[7] ॥ ४ ॥

[8]शूद्रश्चेद्ब्राह्मणीमधिगच्छेद्वीरणपत्रैर्वेष्टयित्वा शूद्रमग्नौ पातयेत् ॥५॥

ब्राह्मण्याः शिरसि वपनं [9]कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते[10] ॥ ६ ॥

[1] स्वैरिण्यानुगमने—अ.

[2] वेश्यागमने—क.

[3] चतुर्थकालाहारो—अ ; चतुर्थकालापहारो—क.

[4] क्षत्रियानुगमने—अ ; क्षत्र्यागमने—क.

[5] यवादिकं—अ.

[6] Compare sūtras 1 to 3 with the following:
स्वैरिण्यां वृषल्यामवकीर्णः सचैलस्नात उदकुम्भं दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोपोषितो यवाढकं दद्यात् ॥ शङ्खलिखितौ, परा. मा. प्रा., पृ. २६९ ; स्मृ. मु., पृ. ८८८ ; Vijñāneśvara cites these *sūtras* with some additions in his commentary on याज्ञवल्क्य ३, २६५ (p. 428) and attributes them to शङ्ख and to शङ्खलिखित on p 440.

[7] cf., गमने तु व्रतं यत्स्याद्गर्भे तद्द्विगुणं भवेत् ॥ उशना, याज्ञ. मिता., ३, २६५ ; पृ. ४२८ ; परा. मा. प्रा., पृ. २७० ; स्मृ. मु., पृ. ८८८.

[8] शूद्रश्चेद्ब्राह्मणीगमने वीरणपत्रैर्वेष्टयित्वा—अ.

[9] कृत्वा सर्वेषामधिगच्छेदभ्यज्य नग्नाम्खरीमारोप्य महारथमनुव्राजयेत् पूतो—अ

[10] Compare sūtras 5 and 6 with the following
शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा नग्नां कृष्णखरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते ॥ वसिष्ठः, २१, १–२.

[1]वैश्यश्चेद्ब्राह्मणीमधिगच्छेद्रोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ [2]प्रास्येत् ॥

ब्राह्मण्या [3]गौरखरारोहणम् ॥ ८ ॥

[4]क्षत्रियश्चेद्ब्राह्मणीमधिगच्छेच्छरपत्रैर्वेष्टयित्वा क्षत्रियमग्नौ [5]प्रास्येत् ॥

ब्राह्मण्याः [6]खरारोहणं पूर्ववत्[7] ॥ १० ॥

[8]पाणिधृतभार्याया मुखे मैथुनं यश्चरेत् तस्येह निष्कृतिर्नास्तीत्येवं प्रजापतिराह[9] ॥ ११ ॥

रजस्वलायाः कामतः सकृद्गमने सप्तरात्रव्रतम्[10] ॥ १२ ॥

अभ्यासे त्वतिकृच्छ्रं[11] तत्र धेनुद्वयं च[12] ॥ १३ ॥

[1] वैश्यश्च for वैश्यश्चेत्—अ.
[2] प्रास्य for प्रास्येत्—अ.
[3] गौरखरमारोहणम्—अ.
[4] क्षत्रियश्च for क्षत्रियश्चेत्—अ.
[5] प्रास्य for प्रास्येत्—अ.
[6] खरारोहणं—क.

[7] Compare sūtras 7 to 10 with the following:

वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वपनं कारयित्वा नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते । राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां श्वेतं खरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते ॥ वसिष्ठः, २१, ३–५.

[8] पाणिगृहीताया भार्याया—क.

[9] cf., यो विप्रः पुंसि सम्पर्कं स्वदारेषु रतिं मुखे ।
तस्येह निष्कृतिर्नास्ति पुनः संस्करणं विना ॥ मार्कण्डेयः, हेमाद्रिः, प्रा., पृ. ३५०.
यस्तु ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवेत स दुष्यति । प्राजापत्येन शुध्यति ॥
उशना, परा. मा. प्रा., पृ. २७१ ; स्मृ. मु., पृ. ८९१.

[10] cf., अमानुषीषु पुरुष उदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ मनुः, ११, १७३.

[11] अभ्यासे-प्रतिकृच्छ्रं—अ ; अभ्यासेत्वतिकृच्छ्रं—क.

[12] cf., रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा ।
तस्य पापविशुध्यर्थमतिकृच्छ्रो विशोधकः ॥ संवर्तः, श्लो. १६५.

श्वमार्जार[1]गोधामण्डूक[2]नकुलसर्पछुच्छुन्दरीमूषकान्[3] हत्वा कृच्छ्रं द्वादशरात्रं[4] चरेत् किंचिद्द्द्यात्कामतः[5] ॥ १४ ॥

अनुक्तनिष्कृतीनामस्थिमतां कृकलासादीनां सहस्रं हत्वानस्थिमतां जलूकादीनां शकटपूर्णपरिमितं हत्वा तप्तकृच्छ्रार्धं[6] धेनुद्वयं दद्यात्[7] ॥१५॥

[1] मार्जाल for मार्जार—क.

[2] नकुल cited twice by क.

[3] मूषको for मूषकान्—अ.

[4] कृच्छ्रद्वादशरात्रं—क.

[5] cf., श्वमार्जारनकुलसर्पदर्दुरमूषकान् हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किंचिद्दद्यात् ॥ वसिष्ठः, २१, २७.

यत्पुनर्वसिष्ठोक्तम्—'श्वमार्जार etc ' इति तत्कामतोऽभ्यासविषयम् ॥ याज्ञ. मिता., ३, २७०.

मार्जारगोधानकुलमण्डूकांश्च पतत्रिणः ।
हत्वा त्र्यहं पिबेत्क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ याज्ञवल्क्यः, ३, २७०.

इदं च प्रत्येकवधविषयम् । समुदितवधे तु—

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥

इति मनूक्त (११, १३१) षाण्मासिकं द्रष्टव्यम् ॥ याज्ञ. मिता. ३, २७०.

मण्डूकनकुलकाकबिम्बदहरमूषकश्वहिंसासु च । गौतमः, २२, १९.

[6] ततकृच्छ्रार्धं—क.

[7] cf., अस्थन्वतां सहस्रं हत्वा । अनस्थिमतामनडुद्भारे च ॥ गौतमः,२२,२२-२३.

अत्र बुद्धिपूर्वे शूद्रहत्याप्रायश्चित्तम् । नेतरत्रेति द्रष्टव्यम् ॥ मस्करी.

अस्थिमतां सहस्रं तु तथानस्थिमतामनः । याज्ञवल्क्यः, ३, २६९.

अस्थिमतां प्राणिनां कृकलासप्रभृतीनामनुक्तनिष्कृतीनां सहस्रं हत्वा अनस्थिमतां च यूकामत्कुणदंशमशकप्रभृतीनामनः शकटं तत्परिपूर्णमात्रं हत्वा शूद्रहत्याव्रतं षाण्मासिकं प्राकृतं ब्रह्मचर्यं चरेद्दश धेनूर्वा दद्यात् ॥ याज्ञ. मिता., ३, २६९

अस्थिमतां तु सत्वानां सहस्रस्य प्रमापणे ।
पूर्णे चानस्थनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ मनुः, ११, १४०.

वैदिककर्मार्थव्यतिरेकेण [1]वृक्षगुल्मलतादीनां छेदने गायत्रीशतं जपेत्[2] ॥ १६ ॥

कृष्यर्थे [3]लाङ्गलार्थे छेदने न दोषः[4] ॥ १७ ॥

काकगृध्रादिपक्षिभिर्दष्टः पुरुषो[5]ऽन्तर्जले प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति नाभेरधोदेशे[6] ॥ १८ ॥

ऊर्ध्वदेशे तु द्विगुणं भवेत् ॥ १९ ॥

[1] वृक्षगुल्मलतानां—अ

[2] cf, वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् । याज्ञवल्क्य, ३, २७६.

फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् ।
गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम् ॥ मनु, ११, १४२.

फलदानां आम्रपनसादिवृक्षाणां गुल्मादीनां च यज्ञाद्यदृष्टार्थं विना छेदने ऋचां गायत्र्यादीनां शतं जप्तव्यम् ॥ याज्ञ मिता., ३, २७६.

ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ विष्णु, ५१, ६३

[3] लाङ्गलार्थेच्छेदने दोषः—अ.

[4] cf, फलपुष्पोपगान् पादपान् हिंस्यात् । कर्षणकरणार्थं चोपहन्यात् ॥ वसिष्ठ, १९, ११–१२.

[5] काकगृध्रादिपक्षिभिर्दष्टपुरुषो—क

[6] cf, पुंश्चलीवानरखरैर्दष्टश्वोष्ट्रादिवायसैः ।

प्राणायामं जले कृत्वा घृतं प्राश्य विशुध्यति ॥ याज्ञवल्क्य, ३, २७७.
श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ मनु, ११, १९९

*Also compare* वसिष्ठ, २३, २६, बोधायन, १, ५, १२६ and विष्णु, ५४, १९.

मस्तके [1]तु चतुर्गुणम्[2] ॥ २० ॥

इति द्वितीयप्रश्ने नवमोऽध्याय

## दशमोऽध्यायः

श्वजम्बूकरासभैर्दष्टा रजस्वला [3]पञ्चरात्र निराहारा पञ्चगव्येन शुध्यति[4]॥१॥

द्विगुणादि पूर्ववत्[5] ॥ २ ॥

श्वादिभिर्गलितमवलीढ प्रदेशमद्भि प्रक्षाल्याग्नौ[6] निष्टपन कुर्यात्तेन शुद्धिर्भवति[7] ॥ ३ ॥

[1] तु—omitted by कै

[2] Compare sūtras 19 and 20 with the following
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुण भवेत् ।
स्यादतत्त्रिगुण वक्त्रे मस्तके तु चतुर्गुणम् ॥ अङ्गिरा , याज्ञ मिता , ३, २७७ , पृ ४३७ , परा मा प्रा , पृ ५५

[3] पञ्चरात्रनिराहारा—अ

[4] cf रजस्वला यदा दष्टा शुना जम्बुकरासभे ।
पञ्चरात्र निराहारा पञ्चगव्यन शुध्यति । पुलस्त्य , याज्ञ. मिता , ३, २७७ , पृ ४३८ , परा मा प्रा , पृ ५५, [व्यास , परा मा प्रा , पृ १२६]

[5] cf ऊर्ध्वं तु द्विगुण नाभेर्वक्त्रे तु त्रिगुण तथा ।
चतुर्गुण स्मृत मूर्ध्नि दष्टेऽन्यत्राप्लुतिर्भवेत् ॥ पुलस्त्य , याज्ञ मिता , ३, २७७ , पृ ४३८ , परा मा. प्रा , पृ ५५-५६

[6] श्वादिभिर्विगलितमपविद्ध प्रदेशमद्भि सम्यक् प्रक्षाल्याग्नौ—अ

[7] cf शुना घ्रातावलीढस्य दन्तैर्विदलितस्य च ।
अद्भि प्रक्षालन प्रोक्तमग्निना चोपचूलनम् ॥ मनु , ११, १९९
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भि प्रक्षालन प्रोक्तमग्निना भूरि तापनम् ॥ पराशर , ५, ६

वेदोक्तकर्मपरित्यागी चान्द्रायणं चरेत् ॥ ४ ॥

संवत्सरपर्यन्तं ब्राह्मणगृहे भिक्षेत[1] ॥ ५ ॥

कन्यादूषणे चान्द्रायणम् ॥ ६ ॥

आत्मनोऽर्थे क्रियारम्भे मद्यपस्त्रीनिषेवणे तदेव[2] ॥ ७ ॥

नारीणां विक्रयं कृत्वा [3]चरेच्चान्द्रायणव्रतम्[4] ॥ ८ ॥

ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुते गायत्र्यष्टसहस्रं प्राणायामेन शुध्यति[5] ॥ ९ ॥

ब्राह्मणीशूद्र्यो रजस्वलयोरन्योन्यस्पर्शे क्रमेण कृच्छ्रेण दानेन शुद्धिः[6] ॥ १० ॥

[1] Compare sūtras 4 and 5 with the following:

वेदान्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्षेण वर्तेत ॥ विष्णुः,५४,१३.

प्रमादाद्ब्राह्मणो लोभाद्देशकालविपर्ययात् ।
अकृत्वैतानि कर्माणि प्राजापत्यं पृथक् चरेत् ॥
हारीतः, हेमाद्रिः, प्रा., पृ. ५३१.

अग्निकार्यं ब्रह्मयज्ञं देवर्षिपितृतर्पणम् ।
त्यक्त्वा मती यदा भुङ्क्ते ज्ञानाच्चान्द्रायणं चरेत् ॥
गौतम, हेमाद्रिः, प्रा, पृ. ५२५.

'नास्तिक्यं व्रतलोपश्च' याज्ञवल्क्यः, ३, २३६; 'उपपातकशुद्धिः स्यादेवं चान्द्रायणेन तु' याज्ञवल्क्यः, ३, २६५.

[2] Compare sūtras 6 and 7 with the following

"कन्यासंदूषणं चैव . . . . . . . ॥
आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।" याज्ञवल्क्यः३,२३८,२३९.
उपपातकशुद्धिः स्यादेवं चान्द्रायणेन तु ॥ याज्ञवल्क्यः, ३, २६५.

[3] चरेच्चन्द्रव्रतम्—क.

[4] cf., नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम् ॥ चतुर्विंशतिमतम्, याज्ञ. मिता., ३, २८७; पृ ४४७.

[5] cf., ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति ॥ मरीचि, याज्ञ. मिता., ३, २८१.

[6] cf., स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा ।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुध्यति ॥ पराशरः, ७, १४–१५.

तस्कर राजभृत्यवृक्षारोहणवृत्तिकगरदाग्निदाश्व[1]गजारोहणवृत्तिकरङ्गोपजीविगणान्नोपजीविशूद्रोपाध्यायनक्षत्रोपजीविब्रह्मोपजीविनाम् ॥ ११ ॥

द्विजाना कार्येषु मूल्यन परिचारक स ब्रह्मोपजीवीत्युच्यते[2] ॥१२॥

देवलकपुरोहितधूर्त[3]कितवकूटकारापत्यमनुष्यपशुविक्रयिणा[4] सर्वस्वत्यागानन्तर वार्षिक कृत्वा पितृतर्पण कृत्वा धेनुर्दद्यात्[5] ॥ १३ ॥

ब्राह्मणस्य समुद्रयाने[6] त्रैवार्षिकम्[7] ॥ १४ ॥

हिरण्यदान च सहस्रसख्याक म्लेच्छादिभ्यो[8] न गृह्णीयात् ॥१५॥

गृह्णीयाच्चेद्ब्राह्मणेभ्यो दद्यात्[9] ॥ १६ ॥

[1] °गजारोहणवृत्तिकरङ्गोपजीविशूद्रोपाध्याय°—अ.

[2] cf, ब्रह्मजीवी ब्राह्मणकार्येषु (द्विजकार्येषु) मूल्येन परिचारक । याज्ञ मिता, ३, २८८; पृ ४४९

[3] कैतव for कितव—अ

[4] विक्रयण for विक्रयिणा—अ

[5] Compare sūtras 11 and 13 with the following
अनृतवाक तस्करो राजभृत्यो वृक्षारोपकवृत्तिगरदोऽग्निदोऽश्वरथगजारोहणवृत्ती रङ्गोपजीवी श्वागणिक शूद्रोपाध्यायो वृषलीपतिर्माण्डिको नक्षत्रोपजीवी श्ववृत्तिब्रह्मजीवी चिकित्सको देवलक पुरोहित कितवो मद्यप कूटकारकोऽपत्यविक्रयी मनुष्यपशुविक्रेता चेति तानुद्धरेत् समेत्य न्यायतो ब्राह्मणव्यवस्थया सर्वस्वत्यागे चतुर्थकालाहारा सवत्सर त्रिषवणमुपस्पृशेयुस्तदन्ते दत्तपितृतर्पण गवाह्निक चेत्येवं व्यवहार्या ॥ प्रचेता, याज्ञ मिता, ३, २८८, पृ ४४९

[6] समुद्रयोनौ—अ

[7] cf, अथ पतनीयानि । समुद्रसयान ब्राह्मणस्य एषामन्यतमस्कृत्वा मितभोजिन स्युरपोऽभ्यवेयु सवनानुकल्पम् । स्थानासनाभ्या विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥ बोधायन, २, १, ४०–४१

[8] म्लेच्छाग्निभोजन—अ

[9] cf यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च ॥ मनु, ११, १९३, विष्णु, ५४, २८.

'सत्परिग्रहपरित्यागी 'मर्कटः ॥ १७ ॥

अदत्तादाने' जम्बूकः गृध्रो द्वादश जन्मानि दश जन्मानि सूकरः श्वानयोनिशतं गत्वा जायते चण्डालेषु ॥ १८ ॥

शाल्मलं 'शणपुष्पं 'करनिर्मथितं दधि बर्हिर्वेदि पुरोडाशं जग्ध्वा नाश्नीयादहर्निशम्' ॥ १९ ॥

इति द्वितीयप्रश्ने दशमोऽध्यायः

[1]यदा भाजनस्थमन्नं [2]केशमक्षिकादिना दूषितं [3]तद्वद्युदस्याप उपस्पृशेत् ॥ ३ ॥

[4]तच्चान्नं भस्मना स्पृशेत्[5] ॥ ४ ॥

शुनामुच्छिष्टं भुक्त्वा मासमेकं गवाघ्रातं काकोच्छिष्टं [6]भुक्त्वा [7]पक्षं व्रती भवेत्[8] ॥ ५ ॥

ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेत् ॥ ६ ॥

वैश्योच्छिष्टाशने पञ्चरात्रम् ॥ ७ ॥

राजन्योच्छिष्टाशने त्रिरात्रम् ॥ ८ ॥

ब्राह्मणोच्छिष्टाशने त्वेकाहम्[9] ॥ ९ ॥

सर्वत्र सुवर्णपञ्चकं पञ्च धेनूर्दद्यात्[10] ॥ १० ॥

[1] यथाभोजनस्थमन्न—अ.

[2] केशमक्षिकादूषितं—क.

[3] व्युदक्योप उपस्पृशेत्—अ.

[4] This sūtra is omitted by क.

[5] Compare sūtras 3 and 4 with the following
यदा तु भाजनस्थमन्नं केशादिदूषितं भवति तदा—
अन्ने भोजनकाले तु मक्षिकाकेशदूषिते ।
अनन्तरं स्पृशेदापस्तच्चान्नं भस्मना स्पृशेत् ॥ प्रचेता, याज्ञ. मिता, ३, २८९; पृ. ४५४.

[6] भुक्त्वा—omitted by क

[7] पक्षमती भवेत्—अ; पक्षमत भवेत्—क

[8] cf, शुनोच्छिष्टं तथा भुक्त्वा मासमेकं व्रती भवेत् ।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत् ॥ शङ्खः, १७, ४६.

[9] Compare sūtras 6 to 9 with the following
ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रम् । वैश्योच्छिष्टाशने पञ्चरात्रम् । राजन्योच्छिष्टाशने त्रिरात्रम् । ब्राह्मणोच्छिष्टाशने त्वेकाहम् ॥ विष्णु, ५१, ५०-५३.

[10] cf, हिरण्यं ब्राह्मणाय दद्याद्गां वाचार्याय ॥ गौतमः, ३०, १३.

पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्[1] ॥ ११ ॥

चण्डालपतितादीनामुच्छिष्टान्नभक्षणे[2] चान्द्रायणं विप्रः ॥ १२ ॥

क्षत्रियस्तु[3] सांतपनम्[4] ॥ १३ ॥

द्विगुणसुवर्णादि पूर्ववत् ॥ १४ ॥

दीपोच्छिष्टं[5] रात्रौ [6]रथ्याहृतमभ्यङ्गशिष्टं च[7] तैलं भुक्त्वा नक्तेन शुध्यति[8] ॥ १५ ॥

यत्किंचिद्भाजने पीतशेषं[9] मुखनिःसृतं तदभोज्यम् ॥ १६ ॥

भोजने [10]चान्द्रायणमभ्यासे[11] ॥ १७ ॥

[1] cf., पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ॥ आपस्तम्बः, १, ४, ११.

[2] भोजने for भक्षणे—क.

[3] क्षत्रियस्य—अ.

[4] Compare sūtras 12 and 13 with the following:

चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सांतपनं चरेत् ॥ अङ्गिराः, याज्ञ. मिता., ३, २८९; पृ. ४५५.

अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः ।
चान्द्रायणं तदर्धार्धं ब्रह्मक्षत्रविशां विधिः ॥ आपस्तम्बस्मृतिः, ५, ९–१०.

[5] द्विजोच्छिष्टं—अ; विप्रोच्छिष्टं—क.

[6] रथ्याहृत°—अ.

[7] च—omitted by अ.

[8] cf., दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं च यत् ।
अभ्यङ्गाचैव यच्छिष्टं भुक्त्वा नक्तेन शुध्यति ॥ षट्त्रिंशन्मतम्, याज्ञ. मिता., ३, २८९; पृ. ४५५.

[9] यत्किंचिद्भोजने पितृशेषं—अ.

[10] चान्द्रायणमभ्यसेत्—अ.

[11] Compare sūtras 16 and 17 with the following:

पिबतः पतितं तोयं भोजने मुखनिःसृतम् ।
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ पराशरः ११, ४०.

पीतशेषं तु यत्किंचिद्भाजने मुखनिःसृतम् ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ (वृद्धशातातपः)

इति तदभ्यासविषयम् ॥ याज्ञ. मिता., ३, २८९; पृ. ४५५.

अमेध्यपतित[1]चण्डालपुल्कसरजस्वलावधूतकुष्ठिकुनखिसंस्पृष्टानि [2]भुक्त्वा कृच्छ्रं चरेत् ॥ १८ ॥

[3]अकामतोऽर्धम्[4] ॥ १९ ॥

रण्डापुत्र भोजनं कुर्विति यत्रान्नं[5] दद्युस्तत्राहोरात्रोपवासः[6] ॥२०॥

उत्थितस्तु यो[7] भुङ्क्ते वामकरनिर्मुक्तभाजने[8] यो भुङ्क्ते तस्य सांतपनम्[9] ॥ २१ ॥

एकपङ्क्त्युपविष्टानां [10]ब्राह्मणानां सह भोजने यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ २२ ॥

मोहाद्भुक्त्वा[11] कृच्छ्रं सान्तपनं चरेत्[12] ॥ २३ ॥

[1] चाण्डाल for चण्डाल—अ. [2] भुक्त्वा कृच्छ्रं चरेत्—omitted by अ.

[3] This sūtra is omitted by अ.

[4] Compare sūtras 18 and 19 with the following
अमेध्यपतितचण्डालपुल्कसरजस्वलावधूतकुणिकुष्ठिकुनखिसस्पृष्टानि भुक्त्वा कृच्छ्रं चरेत् ॥ शङ्ख., याज्ञ मिता, ३, २८९.
एतत्कामकारविषयम् । अकामतोऽर्धम् ॥ याज्ञ. मिता, ३, २८९; पृ. ४५५.

[5] रात्र्यादौ पुत्रभोजनं वुक्तभोजनं कुर्वीत यत्तत्र—अ

[6] cf, कुत्सित्वा वा यत्रान्नं दद्युस्तत्र प्रायश्चित्तमहोरात्रम् ॥ हारीतः, याज्ञ. मिता., ३, २८९; पृ ४५६

[7] उत्थितस्तूभयो.—अ

[8] वाक्करनिर्मुक्तभोजने—अ, वामकरभाजने—क

[9] cf, समुत्थितस्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने ।
एवं वैवस्वत. प्राह भुक्त्वा सान्तपन चरेत् ॥
षट्त्रिंशन्मतम्, याज्ञ मिता., ३, २८९, पृ. ४५६.

[10] विप्राणा—क. [11] मोहाचेद्भुक्त्वा—अ.

[12] Compare sūtras 22 and 23 with the following
एकपङ्क्त्युपविष्टाना विप्राणा सह भोजने ।
यद्येकोऽपि त्यजेत्पात्र शेषमन्न न भोजयेत् ॥
मोहाद्भुञ्जीत यस्तत्र पङ्क्तावुच्छिष्टभोजने ।
प्रायश्चित्त चरेद्विप्र कृच्छ्र सान्तपन तथा ॥ पराशर, ११, ७–८.

क्लिन्नं भिन्नं शवं कूपस्थं यदि दृश्यते तज्जलं पीत्वा त्रिरात्रं पयः पिबेत् ॥ २४ ॥

मानुषे द्विगुणम्[1] ॥ २५ ॥

चण्डालकूपभाण्डस्थं जलं कामाद् पिबेत् सांतपनं विप्रः ॥ २६ ॥

प्राजापत्यं क्षत्रियः ॥ २७ ॥

तदर्धं वैश्यः ॥ २८ ॥

शूद्रः पादम्[2] ॥ २९ ॥

अज्ञानात्तु [3]त्र्यहेण शुध्येत्[4] ॥ ३० ॥

[1] Compare sūtras 24 and 25 with the following:

क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतम् ॥ देवलः, याज्ञ. मिता., ३, २८९; पृ. ४५६.

मृतपञ्चनखात्कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् ॥ विष्णुः, ५४, २.

[2] Compare sūtras 26 to 29 with the following:

चण्डालकूपभाण्डस्थं यो ज्ञानात्पिबते जलम् ।
प्रायश्चित्तं कथं तस्य वर्णे वर्णे विधीयते ॥
चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ आपस्तम्बस्मृतिः, ४, १–२.

A.S.S. edition of Āpastamba reads 'योऽज्ञानात्पिबते जलम्' for 'यो ज्ञानात्पिबते जलम्'. But the better reading is 'यो ज्ञानात्पिबते जलम्' and is supported by विज्ञानेश्वर who reads 'यः कामात्पिबते जलम्' and comments 'इदं च कामकारविषयम्'. *vide*, याज्ञ. मिता., ३, २८९; पृ. ४५६.

[3] प्राजापत्येन—क.

[4] cf., चण्डालकूपभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति ॥ देवलः, याज्ञ. मिता., ३, २८९; पृ. ४५६; परा. मा. प्रा., पृ. ८५.

अन्त्यजसंबन्धादल्पजलाशये[1] कूपवत्[2] ॥ २१ ॥

इति द्वितीयप्रश्ने एकादशोऽध्याय

---

## द्वादशोऽध्यायः

म्लेच्छादीना पुष्करिण्या ह्रदे[3] चैकदेशजलं पीत्वा जानुदघ्नं [4]चेच्छुचि ॥ १ ॥

अधस्तादशुचिः ॥ २ ॥

कामतोऽहोरात्रम् ॥ ३ ॥

अकामान्नक्तभोजी[5] ॥ ४ ॥

रजकादिभाण्डस्थ जल[6] दधि पय पिबेद्द्विजातीना ब्रह्मकूर्चोपवासेन निष्कृति ॥ ५ ॥

[1] अन्त्यज सम चाल्पजलाशये—क

[2] cf, जलाशयेष्वथाल्पेषु स्थावरेषु वसुधरे ।
कूपवत्कथिता शुद्धिर्महत्सु न च दूषणम् ॥ विष्णु, १३, ४६

[3] ह्रदे च जल पीत्वा जानुदघ्न—क, ह्रदैकदेशजल पीत्वा जानुदघ्न—अ

[4] चेच्छुद्धि —अ

[5] Compare sūtras 1 to 4 with the following
म्लेच्छादीनां जल पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्न शुचि ज्ञेयमधस्तादशुचि स्मृतम् ॥
तत्तोय य पिबेद्विप्र कामतोऽकामतोऽपि वा ।
अकामान्नक्तभोजी स्यादहोरात्र तु कामत ॥ आपस्तम्ब, याज्ञ मिता, ३,
२८९; पृ ४५६

[6] रजकादिभाण्डस्थजल—क

[1]शूद्रस्य दानेनोपवासेन[2] ॥ ६ ॥

अन्त्यजैः खानितेषु[3] तटाककूपादिषु स्नात्वाचम्य पीत्वा[4] चाभ्यासे प्राजापत्यम्[5] ॥ ७ ॥

अनभ्यासे पञ्चगव्यम्[6] ॥ ८ ॥

कामतः केवलं पर्युषितं भुक्त्वा [7]त्रिरात्रं व्रतं चरेत्[8] ॥ ९ ॥

स्नेहाक्तं चेन्न दोषः[9] ॥ १० ॥

[1] शूद्रस्योपवासेन—क.

[2] Compare sūtras 5 and 6 with the following:
भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ पराशरः, ६, ३०–३१.

[3] खानितेषु—अ.

[4] स्नात्वा च पीत्वा—क.

[5] cf., अन्त्यजैः खानिताः कूपास्तडागा वाप्य एव वा ।
एषु स्नात्वा च पीत्वा च प्राजापत्येन शुध्यति ॥ (आपस्तम्बः)
इति आपस्तम्बोक्तमभ्यासविषयं वेदितव्यम् ॥ याज्ञ. मिता., ३, २८९; पृ. ४५५.

[6] cf., श्वपाकचाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्धिः ।
अन्त्यैस्तु खानिताः कूपास्तडागानि तथैव च ।
येषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति ॥
आपस्तम्बस्मृतिः, २, २ and ४.

[7] त्रिरात्रंव्रतं—अ.

[8] cf., केवलानि च शुक्तानि तथा पर्युषितं च यत् ।
गुडयुक्तं तथा भुक्त्वा त्रिरात्रं तु व्रती भवेत् ॥ शङ्खः, १७, ३२.
'इदं च कामतः' इति विज्ञानेश्वरः. See. याज्ञ. मिता., ३, २८९; पृ. ४५७.
यवगोधूमविकारं स्नेहाक्तं खाण्डवं च वर्जयित्वा पर्युषितं तस्मादुपवसेत् ॥ विष्णुः, ५१, १५.

[9] cf., अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । याज्ञवल्क्यः, १, १६९.
गुडयुक्तं तु भक्ष्यं स्यात्सर्पिषमिति स्थितिः । शङ्खः, १७, ३३.

सक्तुधानादधितिलसबद्ध[1] भोजन स्नान च निशि वर्जयेत्[2] ॥
यदि स्यात्[3] प्राणायामशत कार्यम्[4] ॥ १२ ॥
यस्याग्नौ न क्रियते [5]यस्य चान्न न दीयते तदभोज्यम्[6] ॥ १३ ॥
भुक्त्वा तूपवसेदह[7] ॥ १४ ॥
अनिवेद्य देवपितृब्राह्मणेभ्यो वृथाकृसरपायसापूप[8]शष्कुलीर्भुक्त्वोपवास[9] ॥ १५ ॥

[1] सक्तुधानादधितिलसबन्ध—अ, सक्तून् धाना दधितिलसबन्ध—क

[2] cf, न दिवा धाना । न रात्रौ तिलसबन्धम् । न दधिसक्तून् । and [स्नानमाचरेत्] न रात्रौ ॥ विष्णु, ६८, २८–३०, ६४, ६

धाना दधि च सक्तूश्च श्रीकामो वर्जयेन्निशि ।
भोजन तिलसबद्ध स्नान चैव विचक्षण ॥ बृहच्छातातप, याज्ञ मिता, ३, २८९, पृ ४५८

[3] यदि न स्यात्—अ

[4] प्राणायामशत कार्य सर्वपापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥ याज्ञवल्क्य, ३, ३०५

[5] यस्य चान्न दीयते न तद्भोज्यम्—क, यस्य चान्न—अ

[6] cf नादत्त्वा । नाहुत्वा ॥ विष्णु, ६८, ३२–३३

[7] Compare sūtras 13 and 14 with the following

यस्य चाग्नौ न क्रियते यस्य चान्न न दीयते ।
न तद्भोज्य द्विजातीनां भुक्त्वा चोपवसेदह ॥ लिखित, याज्ञ मिता, ३, २८९, पृ ४५८

[8] शष्कुल्यान् for शष्कुली —अ

[9] cf, [उपवसेत ।] शाल्ककृशाकृसरसयावपायसापूपशष्कुलीदेवान्नानि हवींषि च ॥ विष्णु, ५१, ३७

वृथाकृसरसयावपायसापूपशष्कुली ।
आहिताग्निर्द्विजो भुक्त्वा प्राजापत्य समाचरेत ॥ लिखित

अनाहिताग्नेस्तु 'शेषेषूपवसेदह' (मनु, ५ २०) इत्युपवासो द्रष्टव्य — याज्ञ मिता, ३, २८९, पृ ४५८ वृथा देवताद्युद्देशमन्तरेण साधिता । याज्ञ मिता, १, १७३

शूद्राणां भाजने[1] भिन्नभाजने च[2] [3]भुक्त्वाहोरात्रोपवासः पञ्चगव्येन शुध्यति[4] ॥ १६ ॥

[5]वटार्काश्वत्थपर्णानां कुम्भीतिन्दुकपर्णयोः कोविदारकदम्ब[6]पद्मपलाशपत्रेषु भुक्त्वैन्दवं चरेत्[7] ॥ १७ ॥

माक्षिकं [8]फाणितं शाकं गोरसं लवणं घृतं हस्तदत्तं भुक्त्वा दिनमेकमभोजनम्[9] ॥ १८ ॥

अभ्यक्तमूत्रपुरीषकरणे श्राद्धान्नभोजने मृतसूतकशूद्रान्नभोजने[10] शूद्रैः

[1] भोजने—अ and क.

[2] च—omitted by अ.

[3] भुक्त्वा सर्वत्रोपवासः—क.

[4] cf., शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ संवर्तः, याज्ञ. मिता., ३, १८९, पृ. ४५८..

सह [1]स्वप्ने त्रिरात्रमभोजनम्[2] ॥ १९ ॥

[3]क्षीरे लवणमुच्छिष्टे [4]घृत रजकतीर्थेषु स्नान ताम्रे गव्य [5]सुरापान समम्[6] ॥ २० ॥

*गणान्न गणिकान्न*[7] [8]*विप्रप्रत्याख्यातान्न* [9]*स्तनगायकवार्धुषिकान्न*[10] [11]च [12]वर्जयेत्[13] ॥ २१ ॥

[1] स्पर्शने—अ

[2] cf, अभ्यक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्नभोजने शूद्रे सह स्वप्न त्रिरात्रम भोजनम् ॥ हारीत, याज्ञ मिता ३, २८९, पृ ४५८

शूद्रान्न सूतकान्न च अभोज्यस्यान्नमेव च । पराशर, ११, ४

ब्रह्मचर्याश्रमी श्राद्धभोजने त्रिरात्रमुपवसेत् ॥ विष्णु, ५१, ४३

[3] क्षारलवणमुच्छिष्टे—अ

[4] च घृत—क

[5] सुरासमम्—क

[6] cf गव्य मूत्र तथा तक्र नालिकेरोदक तथा ।

ताम्रपात्रस्थित पीत्वा पयो लवणसयुतम् ॥

द्विज कामात्सुरापी स्यादज्ञानाच्चान्द्रमक्षणम् ॥ मार्कण्डेय, हेमाद्रि, प्रा, पृ ४१९

*ताम्रपात्रे पय पानमुच्छिष्टे घृतभोजनम् ।*

दुग्ध लवणसार्ध च सद्यो गोमासभक्षणम् ॥

ब्रह्मवैवर्तपुराणे ब्रह्मखण्डे २७ अध्याये—श्लो २२.

ताम्रपात्रस्थित गव्य क्षीर च लवणान्वितम् ।

कराग्रेणैव यद्दत्त घृत लवणमम्बु च ॥ वृद्धहारीतस्मृति, ९, २६६

नोच्छिष्टश्च घृतमादद्यात् ॥ विष्णु, ६८, ३६

[7] गणिकान्न गणान्न—क

[8] विप्र—omitted by क

[9] वेन for स्तेन—क

[10] वार्धुष्याश्च for वार्धुषिकान्न—अ

[11] च—omitted by अ

[12] वे for वर्जयेत्—क

[13] *cf गणान्न गणिकान्न च विदुषा च जुगुप्सितम् ।*

स्तेनगायनयोश्चान्न तक्ष्णो वार्धुषिकस्य च ॥ मनु ४, २०९–२१०

तथाप्युदाहरन्ति ॥ २२ ॥

मृतभर्ता च या नारी रहस्यं कुरुते पतिम् ।
'पश्चात्पापयते गर्भान् सा नारी गणिका स्मृता[2] ॥ २३ ॥
तस्या अन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्[3] ॥ २४ ॥
यस्तु जीवति चौर्येण गोसुवर्णापहारकः ।
परस्वं हरते नित्यं स विप्रो गण उच्यत[4] इति ॥ २५ ॥

इति द्वितीयप्रश्ने द्वादशोऽध्यायः

---

## त्रयोदशोऽध्यायः

निगलेन बद्धस्य कदर्यस्य षण्डडाम्भिकचिकित्सककूरमृगयुद्विपत्पतितपिशुनक्रतुविक्रयिशस्त्रविक्रय्यपविद्ध[5]मार्जारकुक्कुटादीनाम्[6] ॥ १ ॥

[1] पश्चात्प्रजायते—अ.

[2] cf., अभिगच्छति या नारी बहुभिः पुरुषैर्मिथः ।
व्यभिचारीति सा ज्ञेया प्रत्यक्षगणिकेति च ॥ परा. मा. प्रा., पृ. २६०.

[3] cf., कदर्यस्य नृशंसस्य वेश्यायाः कितवस्य च ।
गणान्नं भूमिपालान्नमन्नं चैव श्वजीविनाम् ॥
मौञ्जिकान्नं सूतिकान्नं भुक्त्वा मासं व्रतं चरेत् ॥ शङ्खः, १७, ३९-४०.

[4] गणः=शठब्राह्मणसङ्घः—कुल्लूकः, मनुः, ४, २०९.

[5] मारकुक्कुट्यानाम्—अ.

[6] cf., दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ ४, २१०
अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च ॥ ४, २११
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः । ४, २१२
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ॥ ४, २१३

यो लोभात् [1]पितरौ भृत्यान् पुत्रदारानात्मान[2] धर्मकृत्यं च पीडयति स कदर्य इति[3] ॥ २ ॥

यश्च न जुहोत्युचिते काले न स्नाति न ददाति [4]पितृदेवतार्चनादि न करोति स षण्ड इति ॥ ३ ॥

यस्तु [5]दम्भार्थं स्नाति जपति च स मार्जार इति[6] ॥ ४ ॥

पिशुनानृतिनोश्चान्न क्रतुविक्रयिणस्तथा । ४, २१४
सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥ ४, २१५ मनु

कदर्यबद्धचौराणा क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥

शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ॥
नृशसराजरजककृतघ्नवधजीविनाम् ।
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ॥
एषामन्न न भोक्तव्य सोमविक्रयिणस्तथा ॥ याज्ञवल्क्य, १, १६१–१६५

वार्धुषिककदर्यदीक्षितबन्धनिकाभिशस्तषण्ढानां च । पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोग्रोच्छिष्टभोजिना च । पिशुनानृतवादिक्षतधर्मात्मरसविक्रयिणा च । शस्त्रकारनिषादरङ्गावतारिवेणशस्त्रविक्रयिणा च ॥ विष्णु, ५१, ९–१०, १२, १४.

उत्सृष्टपुंश्चल्यभिशस्तानपदेश्यदाण्डिकतक्षकदर्यबन्धनिकचिकित्सकमृगय्वनिषुचार्युच्छिष्टभोजिगणविद्विषाणानाम् ॥ गौतम, १७, १५

[1] पथिकान्—अ.

[2] पुत्रदारानात्मान च—अ

[3] cf, आत्मान धर्मकृत्य च पुत्रदाराश्च पीडयेत् ।
लोभाद्य पितरौ भृत्यान् स कदर्य इति स्मृत ॥ याज्ञ मिता, १, १६१.

[4] पितृदेवतार्चनार्थिन स षण्ड —क

[5] दम्भार्थं—क

[6] cf, धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भक ।
बैडालव्रतिको ज्ञेयो हिंस्र सर्वाभिसधक ॥ मनु, ४, १९५.

यः सभागतानां[1] पक्षपातं समाश्रयेत्तमाहुः कुक्कुटं [2]देवाः ॥ ५ ॥

यो वा[3] स्वकर्म परित्यज्य परकर्म समाश्रयेदनापदि[4] पतितः [5]सः प्रकीर्तितः[6] ॥ ६ ॥

पितृत्यागी देवत्यागी [7]गुरूणामप्यपूजको गोब्राह्मणस्त्रीवधकृदपविद्ध[8] इति कीर्तित ॥ ७ ॥

आशाकरस्त्वदाता दातुश्च प्रतिषेधकः [शरणागतं यस्त्यजति स चण्डालः प्रकीर्तितः][9] ॥ ८ ॥

[1] यस्य शल्यस्य भागवतानां—अ.

[2] तमाहु कुक्कुटं देवा—omitted by अ.　　[3] य for यो वा—क.

[4] यो वा स्वकर्म परित्यज्य परकर्म समाश्रयेत्—omitted by अ; अनापदि—omitted by क.

[5] सप्रकीर्तित —क

[6] cf, वर स्वधर्मो विगुणः न पारक्यः स्वनुष्ठितः ।
　　परधर्मेण जीवन् हि सद्य पतति जातितः ॥ मनु॰, १०, ९७.

[7] सुराणां for गुरूणां—अ.　　[8] °कृदपविद्ध—omitted by क.

[9] Compare sūtras 3 to 8 with the following
　　न जुहोत्युचिते काले न स्नाति न ददाति च ।
　　पितृदेवार्चनाद्धीन स षण्ढः परिकीर्तित ॥
　　दम्भार्थं जपते नित्य तप्यते च तपस्तथा ।
　　न परत्रार्थमित्युक्तं स मार्जारः प्रकीर्तितः ॥
　　सभागतानां य सभ्य पक्षपात समाचरेत् ।
　　तमाहु कुक्कुटं देवास्तस्याप्यन्नं विवर्जयेत् ॥
　　स्वधर्मं य समुत्सृज्य परधर्मं समाश्रयेत् ।
　　अनापदि तु विद्वद्भिः पतित परिकीर्त्यते ॥
　　देवत्यागी पितृत्यागी गुरूणामप्यपूजकः ।
　　गोब्राह्मणस्त्रीवधकृदपविद्ध प्रकीर्तित. ॥
　　आशाकरस्त्वदाता च दातुश्च प्रतिषेधक ।
　　शरणागतं यस्त्यजति स चण्डाल प्रकीर्तित ॥ यमः, स्मृ. मु, पृ. ४४१.

[1]एतेषामन्नमभोज्यम् ॥ ९ ॥

भुक्त्वा चान्द्रायणं चरेत्[2] ॥ १० ॥

अवलिप्तस्य मूर्खस्य दुष्टवृत्तस्याश्रद्दधानस्यान्नं यो भुङ्क्ते स भ्रूणहा भवति[3] ॥ ११ ॥

[4]यतिवानप्रस्थ[5]पाशुपतानामन्नमभोज्यम्[6] ॥ १२ ॥

[1] तेषा for एतेषा—क

[2] Compare sūtras 1, 9 and 10 with the following

चिकित्सकस्य क्रूरस्य तथा स्त्रीमृगजीविन ।
षण्डस्य कुलटायाश्च तथा बन्धनचारिण ॥
बद्धस्य चैव चोरस्य अवीराया स्त्रियास्तथा ।
चर्मकारस्य वेणस्य क्लीबस्य पतितस्य च ॥
रुक्मकारस्य धूर्तस्य तथा वार्धुषिकस्य च ।
कदर्यस्य नृशसस्य वेश्याया कितवस्य च ॥
गणान्न भूमिपालान्नमन्न चैव श्वजीविनाम् ।
मौक्तिकान्न सूतिकान्न भुक्त्वा मास व्रत चरेत् ॥ शङ्ख , १७, ३६–४०

मासव्रतस्य चान्द्रायणरूपत्वात् ॥ परा मा प्रा., पृ ३०८

शङ्खेन त्वेतानेव किंचिदधिकान् पठित्वा चान्द्रायणमुक्तम् ॥ याज्ञ मिता, ३, २८९, पृ ४६०

यत्त्वभोज्यान्ने सुमन्तुनोक्तम्—अभिशस्तपतितपौनर्भवपुंश्चल्यशुचिदाम्भिककारतैलिकचाक्रिकध्वजिसुवर्णकारलेखकलोहितषण्डबन्धकगणगणिकान्नानि चाभोज्यानि । सौनिकव्याधशुल्कचर्मकारा अभोज्याश्च अप्रतिग्राह्याश्च । अशनप्रतिग्रहयोश्चान्द्रायणं चरेत् ॥ परा• मा प्रा , पृ ३०७

[3] cf अवलिप्तस्य मूर्खस्य दुष्टवृत्तस्य दुर्मते ।
अश्रद्दधानस्य यो भुङ्क्ते भ्रूणहा स वै ॥ स्मृतिरत्नम्, स्मृ मु , पृ ४४१

[4] यदि for यति—अ

[5] पतिताना for पाशुपताना—क

[6] cf, द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा ॥

यतिशब्देन यतिवानप्रस्थौ । लिङ्गिशब्देन पाशुपतादय ॥ परा मा आ, पृ ७१६

ये बलाद्बन्दीकृता[1] म्लेच्छचण्डालदस्युभिरशुभं[2] गवादिप्राणि-हिंसनरूपं कर्म [3]कारितास्तदुच्छिष्टभोजनं खरोष्ट्रविड्वराहामिषभक्षणं तत्स्त्रीणां [4]तथा [5]संगस्तत्स्त्रीभिश्च सह भोजनं तत्र मासोषिते द्विजातौ[6] [7]प्राजापत्यं विशोधनम्[8] ॥ १३ ॥

इति द्वितीयप्रश्ने त्रयोदशोऽध्यायः

---

## चतुर्दशोऽध्यायः

[9]अव्रतस्यान्नमपुत्रस्यान्नं भुक्त्वा त्रिरात्रमभोजनम्[10] ॥ १ ॥

[1] यस्तु बलोद्बन्दीकृत—अ.

[2] म्लेच्छचण्डालदस्युभिः सह—अ.

[3] कारिताः for कारिताः—क.

[4] तदा—अ.

[5] संगतः for संग—अ.

[6] द्विजातौ—omitted by क.

[7] प्राजापत्यविशोधनम्—अ.

[8] cf., बलाद्दासीकृता ये च म्लेच्छचण्डालदस्युभि. ।
अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥
उच्छिष्टमार्जनं चापि तथा तस्यैव भोजनम् ।
खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ॥
तत्स्त्रीणां च तथा संगं ताभिश्च सह भोजनम् ।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥ देवल॰, १७–१९.

Vijñāneśvara attributes these verses to आपस्तम्ब. See याज्ञ. मिता., ३, २८९; पृ ४६०–४६१.

[9] तथ्यान्न for अव्रतस्यान्न—क.

[10] cf., भुक्त्वा चाशुचिकस्मात्तमव्रतस्यापुत्रस्य च ।
शूद्रस्य च तथा भुक्त्वा त्रिरात्रं स्यादभोजनम् ॥ लिखितः, याज्ञ. मिता.,
३, २८९; पृ. ४६१

अलाबुकुम्भीफलरक्तशिग्रुरक्तमूलकश्वेतवृन्ताकवन्यवृन्ताकोपरलरण[1] हिङ्गुकर्पूरवर्जितनिर्यासान्न [2]भक्षयत्[3] ॥ २ ॥

मतिपूर्वभक्षणाभ्यामे प्राजापत्यम्[4] ॥ ३ ॥

अकामत सकृद्भक्षणे चोपवास[5] ॥ ४ ॥

पशुपुरोडाशादेर्भक्षणेऽनार्त्विज्य एकोपवास[6] ॥ ५ ॥

घृतं [7]वा यदि [8]वा तैल विप्रो [9]नाद्यान्नखच्युतम् ॥ ६ ॥

[1] ०श्वेतवृन्ताकाद्यन्यवृन्ताककोषलवर्ण—अ

[2] भक्षणात्—अ

[3] cf , नालिकाशणछत्राककुसुम्भालाबुविड्भवान् ।
कुम्भीकन्दकवृन्ताककोविद राश्च वर्जयेत् ॥ याज्ञ मिता , १, १७५
लोहितान् वृक्षनिर्यासान् वृश्चनप्रभवांस्तथा । मनु , ५, ६
लोहितग्रहणात् हिङ्गुकर्पूरादीनामनिषेध । याज्ञ मिता , १, १७१
अलाबुशिग्रुकवकछत्राकलशुनानि च ।
पलाण्डुश्वेतवृन्ताकरक्तमूलकमेव च ॥
गृञ्जनारुणवृक्षासृग्जन्तुगर्भफलानि च ।
अकालकुसुमादीनि द्विजो जग्ध्वैन्दव चरेत् ॥ वेदव्यासस्मृति , ३, ६४-६५

[4] cf खट्वाबार्ताककुम्भीकवृश्चनप्रभवाणि च ।
भूतृण शिग्रुक चैव सुखण्ड ककराणि च ॥
एतेषां भक्षण कृत्वा प्राजापत्य समाचरेत् ॥ वृद्धयम
तत्कामतोऽभ्यासविषयम् ॥ याज्ञ मिता , ३, २८९ , पृ ४५२

[5] cf अमत्यैतानि षट् जग्ध्वा कृच्छ्र सान्तपन चरेत् ।
यतिचान्द्रायण वापि शेषेषूपवसेदह ॥ मनु , ५, २०

[6] cf , अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ मनु , ५, ७
बर्हिर्वेदि पुरोडाश जग्ध्वा नाद्यादहर्निशम् ॥ षट्त्रिंशन्मतम् , याज्ञ मिता , ३, २८९ , पृ ४५२

[7] च for वा—क

[8] वा—omitted by अ

[9] Adds न before नाद्यात्—अ

अथाचेत्तुल्यं गोमांसभक्षणैः[1] ॥ ७ ॥

पूर्ववत् प्रायश्चित्तम्[2] ॥ ८ ॥

एकेन पाणिना दत्त घृतं तैलं लवण पानीयं पायसं च नाश्नीयात्[3] ॥ ९ ॥

पीतशेष पानीयं पीत्वा [4]ब्राह्मणस्त्रिरात्रं व्रतं कुर्यात् ॥ १० ॥

वामहस्तेन[5] तथा[6] ॥ ११ ॥

पादशेष पीतशेष शौचशेषं जल [7]सुरासमं पर्येग्निकरणं विना[8] ॥१२॥

वस्त्राणामेकपुरुषोद्वाह्यभाराधिकाना[9] स्थूलानामन्येषा च बहूना

[1] Compare sūtras 6 and 7 with the following
घृत वा यदि वा तैल विप्रो नाद्यान्नखच्युतम् ।
यस्मादशुचि तत्प्राह तुल्य गोमांसभक्षणै ॥ वसिष्ठ, अपरार्क, पृ २४२.

[2] 'शेषेपूपवसेदह' मनु, ५, २०

[3] cf लवण व्यञ्जन चैव घृत तैल तथैव च ।
लेह्य पेय च विविध हस्तदत्त न भक्षयेत् ॥
पैठीनसि, परा. मा आ, पृ. ३७५

[4] ब्राह्मणस्त्रिदिनव्रत—क

[5] न—omitted by अ

[6] Compare sūtras 10 and 11 with the following
पीतावशेष पानीय पीत्वा तु ब्राह्मण क्वचित् ।
त्रिरात्र तु व्रत कुर्याद्वामहस्तेन वा पुन ॥ शङ्ख, १७, ५६

[7] सुरापानसम—अ

[8] cf विप्रस्य पीतशेष यत्तोयमन्य पिबेद्यदि ।
मद्यपानसम प्रोक्त तत्तोय मुनिपुङ्गवे ॥ देवल, स्मृ मु, पृ ८८१
पादप्रक्षालनोच्छेषणेन नाचामेत् ॥ बोधायन, १, ५, १०.

[9] माराणां for भाराधिकाना—अ

[1]चण्डलादिस्पृष्टाना वल्ककृता[2] च [3]प्रोक्षणाच्छुद्धि[4] ॥ १३ ॥

श्वेतसूक्ष्मवस्त्रेषु [5]पण्यष्वनूतनेषु विंशता बहुत्वम् ॥ १४ ॥

[6]चित्रवस्त्रेष्वेकादशसु बहुत्वम ॥ १५ ॥

पण्येषु[7] नूतनेषु ततो न्यूनत्वादपि बहुत्वम् ॥ १६ ॥

[8]सौवर्णरजतयोश्चण्डालोदकीरजस्वलोच्छिष्टस्पर्शे त्रि सप्तभस्मभिरुदकेन च शुद्धि[9] ॥ १७ ॥

कास्यादेरावर्तनम् ॥ १८ ॥

[10]ताम्रस्याम्लोदकाच्छुद्धि ॥ १९ ॥

पित्तलस्यापि [11]सौवर्णवत् ॥ २० ॥

[1] चण्डालादिस्पृष्टपादीनां—अ

[2] वल्क कृता च—क

[3] शोषणाच्छुद्धि —अ

[4] *cf*, *अद्भिस्तु प्रोक्षण शौच बहूना धान्यवाससाम्* । *मनु*, ५, ११८
बहुत्व च पुरुषभारहार्याधिकत्वमिति व्याचक्षते—कुल्लूक ॥
प्रोक्षण सहताना च बहूना धान्यवाससाम् ॥ याज्ञवल्क्य, १, १८४
अनेकपुरुषैर्धार्यमाणानां तु धान्यवास प्रभृतीना स्पृष्टानामस्पृष्टाना च प्रोक्षणमेवेति निबन्धकृत ॥ *याज्ञ मिता*, १, १८४

[5] पुण्येषु नूतनेषु—अ

[6] This sūtra is omitted by क

[7] पुण्येषु—अ

[8] सौवर्णरजतयोश्च चण्डालशब्दरजस्वलाशब्दस्पर्शे—अ

[9] cf तैजसाना मणीना च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभि ॥ मनु, ५, १११
तैजसानामुच्छिष्टाना गोशकृद्भस्मभि परिमार्जनमन्यतमेन वा । मूत्रपुरीषासृक्शुक्र कुणपस्पृष्टाना पूर्वोक्तानामन्यतमेन त्रि सप्तकृत्व परिमार्जनम् ॥ बोधायन, १, ५, २६ and ४२

[10] *ताम्र स्यादाम्लोदकाच्छुद्धि* —अ

[11] सौवर्णवत—क.

त्रपुसीसायसाना[1] भस्मजलाभ्याम्[2] ॥ २१ ॥

[3]धान्यमेकपुरुषोद्धरणभाराधिक चण्डालादिस्पृष्ट [4]प्रोक्षणाच्छुध्येत् ॥ २२ ॥

एकपुरुषभार[5] प्रक्षालनाच्छुध्येत्[6] ॥ २३ ॥

इति द्वितीयप्रश्ने चतुर्दशोऽध्याय:

---

[1] त्रपुसीसायसादी—क

[2] Compare sūtras 18 to 21 with the following

ताम्राय कास्यरैत्याना त्रपुण सीसकस्य च ।
शौच यथार्हं कर्तव्य क्षाराम्लोदकवारिभि ॥ मनु , ५, ११४
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभि ।
भस्माद्भि कांस्यलोहानां शुद्धि प्लावो द्रवस्य तु ॥ याज्ञवल्क्य , १, १९०
भस्मना शुध्यते कांस्य ताम्रमम्लेन शुध्यति । पराशर , ७, ४
ताम्ररीतित्रपुसीसमयानामम्लोदकेन । भस्मना कांस्यलोहयो ॥ विष्णु , २३, २५–२६.

अम्भसा हेमरौप्याय कास्य शुध्यति भस्मना ।
अम्लैस्ताम्र च रैत्य च पुन पाकेन मृन्मयम् ॥ बृहस्पति , कुल्लूक , (मनु , ५, ११४)

[3] धान्यमेकपुरुषाद्धरणभाराधिक—अ

[4] प्रोक्षणाच्छुद्धि —अ and क

[5] पुरुषभार—क

[6] Compare sutras 22 and 23 with the following

अद्भिस्तु प्रोक्षण शौच बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भि शौच विधीयते ॥ मनु , ५, ११८
प्रोक्षण सहताना च बहूनां धान्यवाससाम् ॥ याज्ञवल्क्य , १, १८४
बहूनां च । धान्याजिनरज्जुतान्तववैदलसूत्रकार्पासवाससा च ॥ विष्णु , २३, १३–१४
एतेषा प्रक्षालनेन । अल्पाना च ॥ विष्णु , २३, १७–१८,

# पञ्चदशोऽध्यायः

धान्ये गृहस्थिते गृहदाहे [1]सति [2]दग्धे तत्र नरपशुमरणे तद्धान्यं त्याज्यम् ॥ १ ॥

कुसूलगर्भस्थं भूमिगर्भस्थमभ्युक्षणाच्छुध्यति[3] ॥ २ ॥

शाणं[4] [5]पाणितलं [पलमष्ट]मानं [6]प्रस्थमाढकं द्रोणं [द्रोणी] खारी चेति पूर्वपूर्वचतुर्गुणम्[7] ॥ ३ ॥

[1] सति—omitted by अ.

[2] दग्धस्तत्र—अ.

[3] Compare sūtras 1 and 2 with the following :

गृहदाहे समुत्पन्ने विपन्ने पशुमानुषे ।
अभोज्यस्तद्गतो व्रीहिर्धातुद्रव्यस्य संग्रहः ॥
मृन्मयेनावरुद्धानामधो भुवि च तिष्ठताम् ।
यवमाषतिलादीनां न दोषं मनुरब्रवीत् ॥ आदिपुराणम्, अपरार्कः,
पृ. २६० ; परा. मा. प्रा., पृ. १३६.

[4] पाणि—अ.

[5] पाणितलं राजतं प्रस्थं—अ ; पाणितलं मानं राजतं—क.

[6] प्रस्थं—omitted by क.

[7] cf., माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥
कोलद्वयं तु कर्षः स्यात्स प्रोक्तः पाणिमानिका ।
अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥
बिडालपदकं चैव तथा षोडशिका मता ।
करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥
उदुम्बरं च पर्यायैः कर्षमेव निगद्यते ।
स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका तथा ॥
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ।
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥

द्रोणप्रमाणनिर्मित नाले [1]श्वगोखरविड्वराहग्रामकुक्कुटकाकादिस्पृष्टे[2] स्पृष्टमात्रमुद्धृत्य शापमन्त्र [3]पर्यग्निकृत्वा [4]सहस्रगायत्र्याभिमन्त्रितजलै [5]पव

पलाभ्या प्रसृतिर्ज्ञेया प्रसृत च निगद्यत ।
प्रसृतिभ्यामञ्जलि स्यात्कुडवोऽर्धशरावक ॥
अष्टमान च स ज्ञेय कुडवाभ्या च मानिका ।
शरावोऽष्टपल तद्वज्ज्ञेयमत्र विचक्षणै ॥
शरावाभ्या भवेत्प्रस्थश्चतु प्रस्थस्तथाढक ।
भाजन कांस्यपात्र च चतु षष्टिपलश्च स ॥
चतुर्भिराढकैर्द्रोण कलशो नल्वणोऽर्मण ।
उन्मान च घटो राशिर्द्रोणपर्यायसज्ञित ॥
द्रोणाभ्या शूर्पकुम्भौ च चतु षष्टिशरावक ।
शूर्पाभ्या च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥
द्रोणीचतुष्टय खारी कथिता सूक्ष्मबुद्धिभि ।
माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम् ।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् ॥

भावप्रकाशे पूर्वखण्डे द्वितीयभागे प्रथमे मानपरिभाषाप्रकरणे—श्लो ६–१७, १९

४ माषा = १ टाण, धरण, टङ्क
४ शाणा = १ पाणितलम्, कर्ष, अक्ष
४ पाणितलानि = १ पलम्, मुष्टि, बिल्वम्
४ पलानि = १ अष्टमानम्, अञ्जलि, कुडव
४ अष्टमानानि = १ प्रस्थ
४ प्रस्था = १ आढकम्
४ आढकानि = १ द्रोण, राशि
४ द्रोणा = १ द्रोणी गोणी
४ द्रोण्य = खारी, खारिका

[1] श्वगोचर for श्वगोखर—अ
[2] काकादीनां स्पृष्टे for काकादिस्पृष्टे—क
[3] पर्यग्नीकरण कृत्वा—क
[4] सहस्रगायत्र्या प्रोक्षितजले —क
[5] पवन सुवर्जन इत्येनानुवाकेन—क

मान सुवर्जन इत्यनुवाक्न सकृदभिमन्त्रितैवा [1]जलैरभ्युक्ष्यैतदन्न शुद्ध मस्त्विति विप्रवचन लब्ध्वा शुध्यत् ॥ ४ ॥

[2]एवमधिकान्नस्यापि[3] ॥ ५ ॥

घृतदधिक्षीराणि शूद्रभाण्डस्थितानि द्विजभाण्डप्रक्षेपणाच्छुध्यन्ति[4] ॥

गुडलवणादीना पर्यग्निकरणम्[5] ॥ ७ ॥

[1] जलैरभ्युक्ष्येतदन्न—क

[2] एव वतिकान्नस्यापि—अ , एवमधिकान्नस्यापि न दूष्य —क

[3] Compare sūtras 4 and 5 with the following

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
सलिल भस्म मृद्वापि प्रक्षेप्तव्य विशुद्धये ॥
भाक्तास्तमम्बुनिर्णिक्तमज्ञात च सदा शुचि । याज्ञवल्क्य , ३, १८९, १९१
काकश्वानावलीढ तु गवाघ्रात खरेण वा ।
स्वल्पमन्न त्यजेद्विप्र शुद्धिर्द्रोणाढके भवेत् ॥
अन्नस्योद्धृत्य तन्मात्र यच्च लालाहत भवेत् ।
सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत् ॥
हुताशनेन सस्पृष्ट सुवर्णसलिलेन च ।
विप्राणा ब्रह्मघोषेण भोज्य भवति तत्क्षणात् ॥ पराशर , ६, ७१–७४

द्रोणाभ्यधिक सिद्धमन्नमुपहत न दुष्यति । तस्योपहतमात्रमपास्य गायत्र्याभि मन्त्रित सुवर्णाम्भ प्रक्षिपेत् । बस्तस्य प्रदर्शयेदग्नश्च ॥ विष्णु , २३, ३५–३७

महता श्ववायसप्रभृत्युपहताना त देश पुरुषान्नमुत्सृज्य पवमान सुवर्जन इत्येतेनानुवाकेनाभ्युक्षणम् ॥ बोधायन , १, ६, ४६

[4] cf मधूदके पयोविकारे पात्रात् पात्रान्तरानयने शौचम् ॥ बोधायन १, ६, ४७

घृतदधिपयस्तक्राणामाधारभाण्डे स्थितानामदोष । आधारदोषे तु नयेत्पात्रात्पात्रान्तर द्रव्यम् ।

घृत तु पायस क्षीर तथैवेक्षुरसो गुड ।
शूद्रभाण्डस्थित तक्र तथा मधु न दुष्यति ॥ शङ्ख परा मा प्रा
पृ १११, अपरार्क , पृ २६९

[5] cf गुडादीनामिक्षुविकाराणां प्रभूतानां गृहनिहितानां वार्यग्निदानेन । सर्वेलवणाना च ॥ विष्णु , २३, ३१–३२

[1]बाला उपनयनादर्वाक् शुद्धाः[2] ॥ ८ ॥

शूर्पवस्त्रवायुस्पर्शनमनायुष्यमपुण्यं च ॥ ९ ॥

एवं वस्त्रकेशनखादिकम्[3] ॥ १० ॥

दिवा स्वस्त्रियं गत्वा [4]मत्वा सवस्त्रोऽप्स्ववगाह्य प्राणायामेन शुध्येत्[5] ॥ ११ ॥

अमत्या चेत् स्नानमात्रम्[6] ॥ १२ ॥

विप्रं वादेन निर्जित्य त्रिरात्रोपवासः[7] ॥ १३ ॥

[1] बालस्योपनयनादर्वाक् शुद्धिः—अ.

[2] cf., प्रागुपनयनात् कामचारवादभक्षः । न तदुपस्पर्शनादशौचम् ॥ गौतमः, २, १ and ৬.

[3] Compare sūtras 9 and 10 with the following:

शूर्पवातनखाग्राम्बु स्नानवस्त्रपदोदकम् ।
मार्जनीरेणुकेशाम्बु हन्ति पुण्य दिवाकृतम् ॥ अत्रिः, श्लो. ३१५.

[4] मद्यपस्त्र्यपोवगाह्य—अ

[5] cf., प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ॥

याज्ञवल्क्यः, ३, २९०.

इदं च कामकारविषयम् ॥ याज्ञ. मिता., ३, २९०.

[6] cf., मैथुनं तु समासेव्य पुंसि योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥ मनुः, ११, १७४.

'मैथुनं तु . . . . स्नानमाचरेत्' इति मनुस्मरणादकामतः स्नानमात्रं कल्प्यम् ॥ याज्ञ. मिता., ३, २९०.

[7] cf., गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ।
बध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम् ॥ याज्ञवल्क्यः, ३, २९१.

यत्तु यमेनोक्तम्—

वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥

इति तदभ्यासविषयम् ॥ याज्ञ., मिता., ३, २९१.

विप्रं हन्तुं दण्डोद्यमे कृच्छ्रम् ॥ १४ ॥

ताडने त्वतिकृच्छ्रम् ॥ १५ ॥

असृक्पाते[1] कृच्छ्रातिकृच्छ्रे[2] ॥ १६ ॥

प्रमादेन ब्राह्मणप्रहारे[3] तूपोष्य स्नात्वा प्रसादयेत्[4] ॥ १७ ॥

[5]असंनिहितजलदेशेऽप्स्वग्नौ विण्मूत्रमवश करोति सचेल स्नात्वा गा स्पृष्ट्वा शुध्यति[6] ॥ १८ ॥

मत्योपवसेत्[7] ॥ १९ ॥

[1] असृक्ते—अ

[2] Compare sūtras 14 to 16 with the following
विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते ॥ याज्ञवल्क्य , ३ २९२
अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ मनु , ११, २०८
अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रं चान्द्रायण चैव लोहितस्य प्रदर्शने ॥ बोधायन , २, १, ७

[3] प्रमादादेवब्राह्मप्रहारे—क , प्रमादेन ब्राह्मण प्रहारे—अ

[4] cf ताडयित्वा तृणेनापि कण्ठे बाबध्य वाससा ।
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ मनु , ११, २०५
गुरु हुकृत्य त्वकृत्य विप्र निर्जित्य वादत ।
बध्वा वा वाससा क्षिप्र प्रसाद्योपवसेद्दिनम् ॥ याज्ञवल्क्य , ३, २९१

[5] असंनिहित°—अ

[6] cf , विनाद्भिरप्सु वाप्यार्त शारीर संनिवेश्य च ।
सचैलो बहिराप्लुत्य गामालभ्य विशुध्यति ॥ मनु , ११, २०२
इदमकामविषयम् ॥ याज्ञ मिता , ३, २९२

[7] cf , कामतस्तु—
आपद्गतो विना तोय शारीर यो निषेवते ।
एकाह क्षपण कृत्वा सचैलो जलमाविशेत् ॥ यम , याज्ञ मिता , ३, २९२

मत्या सूर्योदयं स्वप्ने तिष्ठन् सावित्रीं[1] जपन्नुपवसेत्[2] ॥ २० ॥

स्नानादिकर्मलोप उपवासः[3] ॥ २१ ॥

अष्टशतजपो वा 'जीर्णमलवद्वाससो धारणे[4]' ॥ २२ ॥

ऋतौ भार्याया अगमनेऽर्धकृच्छ्रम्[5] ॥ २३ ॥

दीपप्रशमनं पुंसः कूष्माण्डछेदनं स्त्रियः कुलक्षयकरं भवेद्ध्रुवम्[7] ॥ २४ ॥

इति द्वितीयप्रश्ने पञ्चदशोऽध्यायः

---

[1] सावित्रं—ख.

[2] cf., तं चेदभ्युदियात्सूर्यः शयानं कामचारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ मनुः, २, २२०.
सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानोऽभ्यस्तमितश्च रात्रिं जपन् सावित्रीम् ॥ गौतमः, २३, २१.
तत्र च सूर्याभ्युदितः समहस्तिष्ठेत् । सावित्रीं च जपेत् ॥ वसिष्ठः, २०, ४–५.

[3] cf., वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ मनुः, ११, २०३.
नित्यं शुचिः सुगन्धिः स्नानशीलः ॥ गौतमः, ९, २.

[4] जीर्णमलवद्वासोधारणे—क.

[5] cf., एतेशमाचाराणामेकैकस्य व्यतिक्रमे गायत्र्यष्टशतं जप्यं कृत्वा पूतो भवति ॥ [इति स्नातकव्रतमधिकृत्य] क्रतुः, याज्ञ. मिता., ३, २९२.
सति विभवे न जीर्णमलवद्वासाः स्यात् ॥ गौतमः, ९, ३.

[6] cf., ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत् ॥
बृहस्पतिः, याज्ञ. मिता., ३, २९२.

[7] cf., सायणीये—
पुंसां दीपप्रशमनात् स्त्रीणां कूष्माण्डखण्डनात् ।
अचिरेणैव कालेन वंशच्छेदो भविष्यति ॥ स्मृतिरत्नाकरः, पृ. ३८१;
स्मृ. मु., पृ. ४६१.

## षोडशोऽध्यायः

अस्नात्वा भोजने रिक्तकमण्डलुवहने[1] चोपवास[2] ॥ १ ॥

एकपङ्क्तौ[3] विषमेणान्नप्रदाने[4] नदीप्रवाहबन्धनादौ[5] विवाहविघ्नकरणे समेषु विषमपूजाकरणे च भैक्ष्यान्नेन[6] प्राजापत्यं चरेत्[7] ॥ २ ॥

अमेध्यगन्धाघ्राणे प्राणायामम्[8] ॥ ३ ॥

कुनखी श्यावदन्तकश्च[9] कृच्छ्रं चरित्वा [10]नखान्तांश्चोद्धरेत्[11] ॥४॥

[1] रिक्तकमण्डलुदाने—अ

[2] cf वहन् कमण्डलु रिक्तमस्नातोऽशश्च भोजनम् ।
अहोरात्रेण शुद्धि स्याद्दिनजप्येन चैव हि ॥ हारीत, याज्ञ मिता,
३, २९२ पृ ४६४

[3] एकपङ्क्त्या—क

[4] विषमेणान्नदाने—क

[5] नदीप्रवाहबन्धनात्तथा—क

[6] भिक्षान्नेन—अ

[7] cf न पङ्क्त्या विषम दद्यान्न याचेत न दापयेत् ।
याचको दापको दाता न वै स्वर्गस्य भागिन ॥
प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्तत ।
नदीसङ्क्रमहन्तुश्च कन्याविघ्नकरस्य च ॥
समे विषमकर्तुश्च निष्कृतिर्नोपपद्यते ।
त्रयाणामपि चैतेषां प्रत्यापत्ति च मार्गताम् ॥
भैक्षलब्धेन चान्नेन द्विजश्चान्द्रायण चरेत् ॥
यम, याज्ञ मिता ३, २९२, पृ ४६४

[8] cf यदुपस्थकृत पाप पद्भ्यां वा यत्कृत भवेत् ।
बाहुभ्यां मनसा वाचा श्रोत्रघ्राणेन चक्षुषा ॥
सर्वं दहति नि शेष प्राणायामैस्त्रिभि कृतै ॥ बोधायन, २, ४, १८

[9] श्यावदन्तश्च—क

[10] अ MS is corrupt It reads नखान्तनाश्चाधर्म्येन पतिता अपि चेद्दरस्तेन पतिनापि पङ्क्तिभोजने etc

[11] cf कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरित्वोद्धरेयाताम् ॥ वसिष्ठ, २० ७

पतितादिपङ्क्तिभोजन उपोष्य पञ्चगव्यम्[1] ॥ ५ ॥

नीलवस्त्रधारणे चैवम्[2] ॥ ६ ॥

कम्बले पट्टवस्त्रे [3]च नैल्यं[4] न दोषः[5] ॥ ७ ॥

[6]पालाशकाष्ठकृतपादुकापीठाद्युपयोगे[7] त्रिरात्रम्[8] ॥ ८ ॥

गुरुशिष्ययोः स्वाध्याये सांनाय्यदोहनकाले [9]विवाहे वरकन्ययोरन्तरागमनेऽभ्यासे चान्द्रायणम्[10] ॥ ९ ॥

अनभ्यासे तूपवासः[11] ॥ १० ॥

दुःस्वप्नारिष्टदर्शनादौ घृतं हिरण्यं च दद्यात्[12] ॥ ११ ॥

[1] cf., अपाङ्क्तेयस्य यः कश्चित् पङ्क्तौ भुङ्क्ते द्विजोत्तमः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ मार्कण्डेयः, याज्ञ. मिता., ३, २९२; पृ. ४६४.

[2] cf., नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ आपस्तम्बस्मृतिः, ६, ४.

[3] च—omitted by क.

[4] नित्यं—क.

[5] cf., कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति ॥ मृगु, याज्ञ. मिता., ३, २९२; पृ ४६४.

[6] पलाश for पालाश—क.

[7] पित्राद्युपयोगे—अ

[8] cf., अध्यास्य शयन यानमासने पादुके तथा ।
द्विज पलाशवृक्षस्य त्रिरात्रं तु व्रती भवेत् ॥ शङ्खः, १७, ५१-५२.

[9] विवाहवर°—अ.

[10] cf., होमकाले तथा दोहे स्वाध्याये दारसंग्रहे ।
अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् ॥ शङ्खः;
एतच्चाभ्यासविषयम् ॥ याज्ञ मिता., ३, २९२; पृ. ४६५

[11] cf., 'शेषेषूपवसेदहः' मनुः, ५, २०.

[12] cf., दुःस्वप्नारिष्टदर्शनादौ घृतं हिरण्यं च दद्यात् ॥
शङ्खः, याज्ञ. मिता., ३, २९२; पृ. ४६५.

[1]नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भव ॥ १२ ॥

मूर्ध्नि [2]कास्याना [3]चूर्णनम् ॥ १३ ॥

मुण्डनम् ॥ १४ ॥

नग्नता ॥ १५ ॥

मलिनाम्बरधारित्वम् ॥ १६ ॥

[4]अभ्यङ्ग ॥ १७ ॥

[5]उच्चात्प्रपतनम् ॥ १८ ॥

[6]दोलारोहणम् ॥ १९ ॥

अर्जन[7] पद्मलोहानाम् ॥ २० ॥

हयाना च [8]मारणम् ॥ २१ ॥

[9]रक्तपुष्पद्रुमचण्डालवराहमल्लकखरोष्ट्राणामारोहणम्[10] ॥ २२ ॥

पक्वमासतैलकृसराणा भक्षणम् ॥ २३ ॥

नर्तनहसनविवाहगीतगानानि[11] ॥ २४ ॥

तन्त्रीवाद्यव्यतिरिक्तवाद्यवादनम् ॥ २५ ॥

[12]स्रोतोऽवगाहनम् ॥ २६ ॥

गोमयवारिस्नानम् ॥ २७ ॥

पङ्कोदकमज्जनम् ॥ २८ ॥

[13]महीतोयस्नानम् ॥ २९ ॥

[1] नगाग्रेषु वा तृण°—अ, नाभौ वा गात्रेषु वा तृण°—क

[2] कांस्यादीनां—क

[3] चूर्णम्—अ

[4] अभ्यञ्जनम्—क

[5] दिव्यात्प्रपतनम्—अ

[6] आन्दोलनारोहण—क

[7] वर्जन—क ; मज्जन—अ

[8] हरणम्—अ

[9] रक्तपुष्पधृत चण्डाल°—अ

[10] चारोहणम् for आरोहणम्—क

[11] नर्तनहासनविवाहगतगानानि—अ

[12] प्रेतोपगूहगमनम्—अ

[13] महिषीतोयस्नानम्—क

मातुर्जठरप्रवेशः ॥ ३० ॥

शक्रध्वजचन्द्रसूर्याणां पतनम् ॥ ३१ ॥

दिव्यान्तरिक्षभौमोत्पातः ॥ ३२ ॥

देवब्राह्मणभूपालप्रजानां प्रकोपनम् ॥ ३३ ॥

[1]कुमार्यालिङ्गनम् ॥ ३४ ॥

पुरुषमैथुनम् ॥ ३५ ॥

स्वगात्राणां[2] हानिः ॥ ३६ ॥

दक्षिणदिग्गमनम् ॥ ३७ ॥

व्याधिपीडनम् ॥ ३८ ॥

[3]फलापहरणम् ॥ ३९ ॥

शाड्वलशोषणम्[4] ॥ ४० ॥

गृहपतनम् ॥ ४१ ॥

पिशाचक्रव्यादवानरैः क्रीडनम् ॥ ४२ ॥

परादभिभवः ॥ ४३ ॥

व्यसनम् ॥ ४४ ॥

काषायवस्त्रधारणम् ॥ ४५ ॥

[1] कुमार्या लिङ्गदर्शनम्—अ.

[2] स्वगोत्राणा—अ

[3] पलाशहरणम्—क

[4] Compare sūtras 33 to 40 with the following:

देवद्विजादिभूपानां प्रजानां क्रोध एव च।
आलिङ्गनं कुमारीणां प्राणिनां चैव मैथुनम् ॥
हानिश्चैव स्वगात्राणां नीरकण्ठमनःप्रियात्? ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥
फलापहारश्च तथा तथा शाड्वलशोषणम् ॥

इत्यशुभस्वप्नाधिकारे स्वप्नप्रकाशिका, पृ ७५.

काषायद्रव्यक्रीडनम् ॥ ४६ ॥

[1]स्नेहावगाहनम्[2] ॥ ४७ ॥

[1] स्नानम् for स्नेहावगाहनम्—क

[2] *Compare sūtras 45 to 47 with the following*

वाषायवस्त्रधारित्वं तद्वत्क्रीडनके तथा ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥ स्वप्नप्रकाशिका, पृ ७६.

Compare sutras 12 to 47 with the following

इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।
नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥
उच्चात्प्रपतनं चैव दोलारोहणमेव च ।
अर्जनं पङ्क(पद्म)लोहानां हयानामपि मारणम् ॥
रक्तपुष्पद्रुमाणां च मण्डलस्य (चण्डालस्य) तथैव च ।
वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥
भक्षणं पक्षिमत्स्यानां (पक्वमांसानां) तैलस्य कृसरस्य च ।
नर्तनं हसनं चैव विवाहो गीतमेव च ॥
तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम् ।
स्रोतोऽवगाहगमनं स्नानं गोमयवारिणा ॥
पङ्कोदकेन च तथा महीतोयेन चाप्यय ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥
शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥
देवद्विजातिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥
फलापहानिश्च तथा पुष्पहानिस्तथैव च ।
गृहाणां चैव पातश्च गृहसमार्जनं तथा ॥
क्रीडा पिशाचक्रव्यादवानरक्षनरैरपि ।
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ॥

एवमादिषु दुःस्वप्नेषु सहिरण्याज्यपात्रे यन्मे मन इति मुखमवलोक्य[1] ब्राह्मणाय दद्यात्[2] ॥ ४८ ॥

अनुहवं परिहवमिति सहस्रकृत्वो वा जपेत्[3] ॥ ४९ ॥

इति द्वितीयप्रश्ने षोडशोऽध्यायः

---

## सप्तदशोऽध्यायः

अङ्गवङ्गकलिङ्गदेशान् गत्वा पुनःसंस्कारमर्हति[4] ॥ १ ॥

काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं तथा ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ॥

मत्स्यपुराणम्, २४२, २-१५.

[1] मुखमवेक्ष्य—क.

[2] cf., दुःस्वप्नारिष्टदर्शनादौ घृतं सुवर्णं च दद्यात् ॥ शङ्खः, याज्ञ. मिता., ३, २९२; पृ. ४६५.

[3] Compare sūtras 48 and 49 with the following:

दुःस्वप्नानेवमादीन्वै दृष्ट्वा नूनमस्य कस्यचित् ।
स्नानं कुर्यादुषस्येव दद्याद्धेमतिलानि यः ॥
पठेत्स्तोत्राणि देवानां रात्रौ देवालये वसेत् ।
कृत्वैवं त्रिदिनं विप्रो दुःस्वप्नात्परिमुच्यते ॥ स्वप्नप्रकाशिका, पृ. ७५.
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ।
तेषामकथनं धन्यं भूयः प्रस्वापनं तथा ॥
कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम् ।
स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम् ॥
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम् । मत्स्यपुराणम्, २४२, १५-१७.

[4] cf., सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥ देवलः, श्लो. १६.

आत्मनः [1]शक्रुद्वीक्षेत चेत् सूर्यं ब्राह्मणं गा वा पश्येत्[2] ॥ २ ॥

अग्निं[3] खट्वादेरव कृत्वा दर्भैश्च पादौ संमृज्योपवसेत्[4] ॥ ३ ॥

क्षत्रियवैश्ययोरभिवादने तूपवास. ॥ ४ ॥

शूद्राभिवादने तु त्रिरात्रम्[5] ॥ ५ ॥

[1] शक्रुद्वीक्षेत चेत्—अ ; शक्रुद्विक्षेपयेत्—क

[2] cf , प्रत्यादित्य न मेहेत न वीक्षेदात्मन शकृत् ।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा ॥ यम , याज्ञ. मिता., ३, २९१; पृ. ४६५.

[3] The text is printed here as found in क MS. The MS अ omits sūtras 3 to 11 of this chapter here except the words 'अग्निं' (XVII, 3) and 'सावित्रीसहस्रमप्सु जपेत्' (XVII, 11) and cite them between the words "नद्यां स्नात्वा' and 'प्राणायामत्रयम्' of sūtra 1 of chapter XVIII Sūtras 12 to 17 of chapter XIX are cited here between the words 'अग्निं' (XVII, 3) and 'सावित्रीसहस्रमप्सु जपेत्' (XVII, 11). Only the word 'जप्यायुन' (XIX, 12) is omitted here. Sūtras 13 to 17 are repeated in chapter XIX Thus the MS. अ reads as follows

आत्मनः शक्रुद्वीक्षेत चेत् सूर्य ब्राह्मण गा वा । पश्येदग्निं तथा देवीं सर्वकल्मष-नाशिनीम् । लक्ष जप्त्वा तु तां देवीं महापातकनाशनीम् ॥ सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पग । सुरापश्च विशुध्यन्ति लक्षं जप्त्वा न सशय ॥ एकादशाना रुद्रानुवाकानां समूहो रुद्रैकादशिनी । सा च विशेषत सर्वपापहरा । एकादश गुणान्वापि रुद्रानावृत्य धर्मवित् । महद्भ्यश्च तु पापेभ्यो मुच्यते नात्र सशय. ॥ इति । महापातकेष्वेकादशावृत्तिकथनादति-पातकादिषु चतुर्थांशो ह्रास । सावित्रीसहस्रमप्सु जपेत् । कण्ठालरजकादिस्पर्शे etc.

[4] cf , पादप्रतपन कृत्वा कृत्वा वह्निमधस्तथा ।
कुशैः प्रमृज्य पादौ तु दिनमेकं व्रती भवेत् ॥ शङ्ख , १७, ४९–५०.
नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥
अधस्तान्नोपदध्याच्च न चैनमभिलङ्घयेत् । मनु , ४, ५३–५४
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ मनु , ११, २०३

[5] Compare sūtras 4 and 5 with the following
क्षत्रियाभिवादनेऽहोरात्रमुपवसेत् । वैश्याभिवादने द्विरात्रम् । शूद्रस्याभिवादने त्रिरात्रमुपवासः ॥ हारीतः, याज्ञ मिता , ३, २९२ , पृ ४६५.

शय्यारूढपादुकोपानहारोपितपादोच्छिष्टान्धकारस्थ[1]श्राद्धकृज्जपहोम देवता[2]पूजानिरताज्यसमित्पुष्पकुशाम्यम्बुमृदन्नपाणिक [3]विप्रसमूहस्थ चाभिवाद्य त्रिरात्रम्[4] ॥ ६ ॥

एतत्प्रायश्चित्तमभिवाद्याभिवादकयोरपि[5] समानम् ॥ ७ ॥

अशुचिर्नाभिवादयेत ॥ ८ ॥

पितृकार्याणि कुर्वन् ॥ ९ ॥

शयानश्च[6] ॥ १० ॥

[1] श्राद्ध—omitted by अ, श्राद्धकृतो जप°—क

[2] °पूजारतसमित्पुष्प°—अ, °पूजाज्यसमित्पुष्प°—क

[3] विप्र समूहस्थ—क

[4] cf शय्यारूढे पादुकोपानहारोपितपादोच्छिष्टान्धकारस्थश्राद्धकृज्जपदेवपूजानिरताभिवादने त्रिरात्रमुपवास स्यादन्यत्र निमन्त्रितेनान्यत्र भोजनेऽपि त्रिरात्रम् ॥ हारीत, याज्ञ मिता, ३, २९२, पृ ४६५

समित्पुष्पकुशाज्याम्बुमृदन्नाक्षतपाणिकम् ।
जप होम च कुर्वाण नाभिवादेत वै द्विजम् ॥ आपस्तम्ब, याज्ञ मिता, ३, २९२, पृ ४६५

जपयज्ञजलस्थश्च समित्पुष्पकुशानलान् ।
उदकुम्भ च भैक्ष च वहन्त नाभिवादयेत् ॥ हारीत, कृत्यकल्पतरौ ब्रह्मचारिकाण्डम्, पृ १९५

[5] अभिवाद्योरपि for अभिवादकयोरपि—व

[6] Compare sutras 7 to 10 with the following

सोपानत्कश्चाशनासनाभिवादननमस्कारान् वर्जयेत् ॥ गौतम, ९, ४७
चशब्दात पादुकास्थश्च ॥ मस्करी

अभिवादकस्यापीदमेव प्रायश्चित्तम्—"नोदकुम्भहस्तोऽभिवादयेत् । न भैक्ष चरन् । न पुष्पाज्यादिहस्त । नाशुचि । न जपन् । न देवपितृकार्यं कुर्वन् । न शयान ॥ इति तस्यापि शङ्खेन प्रतिषेधात् ॥ याज्ञ मिता ३, २९२, पृ ४६५

सक्रान्त्यादिनिमिद्धकालेऽभ्यङ्गभोजनमैथुनादौ सावित्रीसहस्रमप्सु जपेत्[1] ॥ ११ ॥

चण्डालरजकादिस्पृष्टस्पर्शे[2] तूपवास[3] ॥ १२ ॥

अभ्यासे त्रिरात्रम्[4] ॥ १३ ॥

यूप [5]चण्डाल देवलक वित्तार्थे देवपूजक ब्राह्मण च स्पृष्ट्वा [6]सचेलस्नानम्[7] ॥ १४ ॥

[8]एतद्विष्ण्वर्चकविषयम् ॥ १५ ॥

सूर्यचन्द्राद्यर्चकाना[9] सद्य पतनम् ॥ १६ ॥

[1] cf क्रान्त्यादिनिमित्तेष्वस्नात्वा भोजनेऽष्टसहस्र गायत्रीजप ॥ प्रायश्चित्तेन्दुशेखर, पृ २१

[2] चण्डालरजकादिस्पर्शे—अ

[3] cf चण्डालरजकादिस्पृष्टस्पर्शनिमित्ते त्वस्नात्वा भोजने तूपवास ॥ प्रायश्चित्तेन्दुशेखर, पृ २३

[4] cf यत्तु देवलेनोक्तम्—

अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुध्यत्युपवासेन त्रिरात्रेण तत शुचि ॥

इति, तत् सहोपवेशनशयनादिना चिरस्पर्शविषयम् ॥ परा मा. प्रा, पृ ५१

[5] चण्डालदेवलक—अ

[6] सचेल स्नानम्—क

[7] cf, चैत्यवृक्षश्चितिर्यूपश्चण्डाल सोमविक्रयी ।
एतास्तु ब्राह्मण स्पृष्ट्वा सवासा जलमाविशेत् ॥ पराशर, १२, २७
चिर्ति च चितिकाष्ठ च यूप चण्डालमेव च ।
स्पृष्ट्वा देवलक चैव सवासा जलमाविशेत ॥ चतुर्विंशतिमतम्, परा मा प्रा, पृ ८३
देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्यकव्येषु गर्हित ॥ स्मृत्यन्तरे, वीरमित्रोदय शुद्धिप्रकाश पृ १४६ आश्वमेधिके इति स्मृतिरत्नाकर, पृ ३१

[8] एतद्विष्ण्वर्चनविषयम्—अ

[9] सूर्यचन्द्राद्यर्चने—अ

तीर्थयात्रां विना शतयोजनादधिकदूरदेशगो महापथिकः[1] ॥ १७ ॥

प्रहसनेऽनृतभाषणे[2]ऽधोवायुसमुत्सर्गे[3] मार्जारस्पर्शे कर्म कुर्वन्नप उपस्पृशेत्[4] ॥ १८ ॥

इति द्वितीयप्रश्ने सप्तदशोऽध्यायः

---

## अष्टादशोऽध्यायः

भुञ्जानस्य मस्तकेऽमेध्यपतने तदन्नं त्यक्त्वा नद्यां स्नात्वा[5] प्राणायामत्रयम्[6] ॥ १ ॥

[1] तीर्थयात्रामन्तरेण देशान्तरगमने देवलः प्रायश्चित्तमाह ॥ परा. मा. प्रा., पृ. ४४७.

[2] प्रहसेऽकृतभाषणे—क.

[3] अधोवायुविसर्जने—क.

[4] cf., सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।
पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् ॥ मनुः, ५, १४५.
अधोवायुसमुत्सर्गे त्वाक्रन्दे क्रोधसंभवे ।
मार्जारमूषिकास्पर्शे प्रहासेऽनृतभाषणे ॥
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥ बृहस्पतिः, स्मृतिरत्नाकरः, पृ ६५.

[5] MS. अ reads thus:
नद्यां स्नात्वा षड्ढोरथं कृत्वा दर्भैश्च पादं संमृज्योपवसेत । क्षत्रियवैश्ययोरभिवादने तूपवासः । शूद्राभिवादने तु त्रिरात्रम् । शय्यास्थपादुकोपानद्धारोपितपादोच्छिष्टान्धकारस्थकृतो जपहोमदेवतापूजास्नसमित्पुष्पकुशाम्भस्त्रमृद्भपाणिकं विप्रसमूहस्थं चाभिवाद्य त्रिरात्रम् । एतत्प्रायश्चित्तमभिवाद्याभिवादकयोरपि समानम् । अशुचिनाभिवादयेत् । पितृकार्याणि कुर्वन । दयानश्च । संक्रान्त्यादिनिषिद्धकालेऽभ्यङ्गभोजनमैथुनानि प्राणायामत्रयम् । भुञ्जानस्यामेध्योत्रस्पर्शने etc. See foot-note on XVII, 3, p. 79.

[6] cf., भुञ्जानस्य तु विप्रस्य विष्ठा चेन्मस्तके पतेत् ।
अन्नं त्यक्त्वा नदीस्नातः प्राणायामं त्रिरभ्यसेत ॥ वृद्धयाज्ञवल्क्यः,
अपरार्कः, पृ. ११७१.

